१८४ वर्णिराजाय नम
१८५ दयाकराय नम
१८६ जटिने नम
१८७ कौपीनवसनाय नम
१८८ शालमामतृपाहराय नम
१८९ शिवाससक्तये नम
१९० अक्षोभ्याय नम
१९१ नि मङ्गाय नम
१९२ अध्यात्मवित्तमाय नम
१९३ सदासमाधये नम
१९४ आनन्दिने नम
१९५ निर्दोषाय नम
१९६ दोषनाशनाय नम
१९७ कान्तारगतये नम
१९८ एकाकिने नम
१९९ सर्वसाधुगुणाढ्याय नम
२०० तैर्थिकाय नम
२०१ तीर्थधर्मज्ञाय नम
२०२ तीर्थस्थाधर्मनाशनाय नम
२०३ अनादृतवपु सौख्याय नम
२०४ प्राणायामपराय नम
२०५ व्रतिने नम
२०६ ऋपिवृत्तये नम
२०७ मुनये नम
२०८ मौनिने नम
२०९ निर्विकल्पाय नम
२१० अल्पभाषणाय नम
२११ वस्त्रपूतोदकपिबाय नम
२१२ यावदर्थाङ्गचेष्टिताय नम
२१३ मङ्गश्म्वैरवर्तित्वबोधिग्रन्थ-
विवर्जनाय नम
२१४ निरुपानहे नम
२१५ अपृष्टाध्वने नम
२१६ घोरारण्यचराय नम
२१७ अभ्रमाय नम
२१८ कुयङ्गगन्धासहाय नम
२१९ असक्ताय नम
२२० जडाङ्गिरसवर्तनाय नम
२२१ ऊर्ध्वरेतसे नमः
२२२ ब्रह्मचारिणे नम
२२३ योगिने नम
२२४ योगज्ञसत्ताय नम
२२५ योगी द्रदुश्वराचाराय नमः
२२६ सौराष्ट्रजनपावनाय नम
२२७ लोजलोकमहानन्दाय नमः
२२८ साधवे नम
२२९ साधुप्रपूजिताय नमः
२३० अनुच्चारितदुर्वाक्याय नम

२३१ मधुराक्षरभाषणाय नमः
२३२ त्यागिमान्याय नमः
२३३ महायोगिने नमः
२३४ सदाश्चर्यक्रियाय नमः
२३५ स्थिराय नमः
२३६ ध्यात्रे नमः
२३७ ध्यातृमनोदर्शिने नमः
२३८ मनस्विने नमः
२३९ मानदाय नमः
२४० मृदवे नमः
२४१ प्रश्नोत्तरपटवे नमः
२४२ वेदतत्त्वज्ञाय नमः
२४३ बुद्धिमते नमः
२४४ बुधाय नमः
२४५ उद्धवेक्षोत्सुकाय नमः
२४६ अनन्ताय नमः
२४७ पत्रीलेखपटवे नमः
२४८ प्रभवे नमः
२४९ पद्युत्तरज्ञातनिजैश्वर्यसाध्व-
तिमानिताय नमः
२५० रामानन्दस्वामिदीक्षान-
न्दाय नमः
२५१ साधुप्रियाय नमः
२५२ प्रियाय नमः

२५३ बोधन्यासमहादीक्षाय नमः
२५४ गुरुसेवापराय नमः
२५५ यमिने नमः
२५६ भक्ताय नमः
२५७ नारायणमुनये नमः
२५८ सहजानन्दाय नमः
२५९ आत्मदर्शे नमः
२६० गुरुमान्याय नमः
२६१ गुरुप्रेष्ठाय नमः
२६२ गुर्वन्तिककृताञ्जलये नमः
२६३ गुर्वाज्ञाकृततत्पार्श्वोपवेशग-
मनक्रियाय नमः
२६४ नारायणानन्यमतये नमः
२६५ एकान्तिकमुनिप्रियाय नमः
२६६ वर्णीन्द्राय नमः
२६७ नैष्ठिकप्रेष्ठाय नमः
२६८ एकान्तिकसदर्चकाय नमः
२६९ यशस्विने नमः
२७० भूरितेजस्विने नमः
२७१ वैदिकाय नमः
२७२ ब्रह्मवर्चस्विने नमः
२७३ सत्यायवर्तिने नमः
२७४ निर्द्वेषाय नमः
२७५ भक्तिहर्षविवर्धनाय नमः

२७६ गृहीतहितवाचे नमः
२७७ सर्वभूततत्त्वविदे नमः
२७८ ऊहवते नमः
२७९ सत्यप्रियाय नमः
२८० सत्यपराय नमः
२८१ निष्कामनरवल्लभाय नमः
२८२ अद्रोहकाय नमः
२८३ सदोद्योगिने नमः
२८४ पड्डूर्मिविजयक्षमाय नमः
२८५ धर्मकार्यक्षिप्रकारिणे नमः
२८६ दीर्घदर्शिने नमः
२८७ विचारवते नमः
२८८ देशकालाद्यविहतस्वस्वरूपाचलस्थितये नमः
२८९ सत्तमाय नमः
२९० दमवते नमः
२९१ दक्षाय नमः
२९२ विनीताय नमः
२९३ स्मृतिमते नमः
२९४ ऋजवे नमः
२९५ सच्छास्त्रव्यसनाय नमः
२९६ अव्यग्राय नमः
२९७ अभिमानिपुरपारुचये नमः
२९८ अतिसर्वमतये नमः
२९९ याग्मिने नमः
३०० सरसङ्गिजनवल्लभाय नमः
३०१ अप्रमत्ताय नमः
३०२ अतिप्रगल्भाय नमः
३०३ अनलसाय नमः
३०४ अन्यगुणग्रहाय नमः
३०५ सदाचारप्रियाय नमः
३०६ शुष्कज्ञानिवादतमोरवये नमः
३०७ कृष्णार्पिताज्ञगन्धादिदेवतापितृयाजकाय नमः
३०८ सद्य:प्रश्नसमाधानविस्मापितसमाजनाय नमः
३०९ अजातशत्रवे नमः
३१० समदृशे नमः
३११ धर्मनिष्ठमहादराय नमः
३१२ अनसूयाय नमः
३१३ अचलप्रज्ञाय नमः
३१४ कामशास्त्रविवर्जनाय नमः
३१५ दीनाद्युपविक्लवरवेक्षाजाततीव्रव्यथाकुलाय नमः
३१६ स्वधर्मादिगुणोपेतहर्यंभक्तजनारुचये नमः
३१७ सन्मण्डलावासरुचये नमः

३१८ सन्मण्डलपरायणाय नमः
३१९ सच्छास्त्रनिन्दितत्यागिने नमः
३२० प्रशस्तार्थनिषेवकाय नमः
३२१ सम्पदापत्समाय नमः
३२२ मोक्षधिषणाय नमः
३२३ प्रतिभानवते नमः
३२४ सुचिरश्रुतसच्छास्त्राय नमः
३२५ नापमानितसज्जनाय नमः
३२६ वाक्यार्थक्षिप्रविदे नमः
३२७ शत्रुमित्रदत्तसमोत्तराय नमः
३२८ अग्राह्यवस्त्वनाकाङ्क्षिणे नमः
३२९ नष्टवस्तुशुचोज्झिताय नमः
३३० यथोचितसमारम्भाय नमः
३३१ सफलारब्धसत्क्रियाय नमः
३३२ सच्छास्त्रानुगतप्रज्ञाय नमः
३३३ दैवपित्र्यस्वकर्मकृते नमः
३३४ अपैशुन्यकृते नमः
३३५ अद्यूताय नमः
३३६ पापिससर्ग्यनादराय नमः
३३७ ब्रह्मनिंदाश्रव.खेदाय नमः
३३८ स्त्रीप्रसङ्गमृगयारुचये नमः
३३९ अकार्याचरणह्रीताय नमः
३४० समयोचितभाषणाय नमः
३४१ निर्लज्जानतसद्विप्रगुरुदेवपदाम्बुजाय नमः
३४२ मुक्तानन्दानुगाय नमः
३४३ तुष्टाय नमः
३४४ गुणाब्धये नमः
३४५ सन्मनोहराय नमः
३४६ गुरुदत्तजनस्वाम्याय नमः
३४७ सुरम्यविषयारुचये नमः
३४८ गुरुयाचितभक्तान्तदु.खस्वप्राप्तिसद्वराय नमः
३४९ अतिमानुषसत्कर्मणे नमः
३५० सुखसेव्याय नमः
३५१ अखिलेष्टदाय नमः
३५२ प्रपन्नाभयदाय नमः
३५३ श्रीमते नमः
३५४ उत्तमोत्तमाय नमः
३५५ आत्मवते नमः
३५६ तापत्रितयहृद्वार्ताय नमः
३५७ सदसद्व्यक्तिवित्तमाय नमः
३५८ सत्पतये नमः
३५९ सर्वहितकृते नमः
३६० ज्ञानदाय नम.

३६१ भवमोचकाय नमः
३६२ भूरिप्रतापाय नमः
३६३ निर्मोहाय नमः
३६४ महाराजाय नमः
३६५ नृपार्चिताय नमः
३६६ अघ्र्प्याय नमः
३६७ अविकृताय नमः
३६८ अजय्याय नमः
३६९ शरण्याय नमः
३७० भक्तवत्सलाय नमः
३७१ अतर्क्याय नमः
३७२ अनुपमाय नमः
३७३ अपाराय नमः
३७४ अप्रमादाय नमः
३७५ अव्ययाय नमः
३७६ उज्ज्वलाय नमः
३७७ धर्मशंसिने नमः
३७८ धर्महेतवे नमः
३७९ वेदगूढार्थबोधकाय नमः
३८० कालमायाभयत्रात्रे नमः
३८१ भक्तवर्मणे नमः
३८२ सुमङ्गलाय नमः
३८३ उपासनारीतिवक्त्रे नमः
३८४ ब्रह्मधामप्रदर्शकाय नमः
३८५ ब्रह्मभूतपरब्रह्मोपासनास्थापकाय नमः
३८६ अक्षराय नमः
३८७ कन्दर्पदर्पदलनाय नमः
३८८ नैष्ठिकव्रतपोषकाय नमः
३८९ अदीनदिव्यचरिताय नमः
३९० मनोनिग्रहयुक्तिज्ञाय नमः
३९१ वरणीयाय नमः
३९२ अन्यदुःखज्ञाय नमः
३९३ संसारार्णवनाविकाय नमः
३९४ स्वामिनारायणाय नमः
३९५ वाक्यसुधातर्पितसरसभाय नमः
३९६ विधवास्पर्शदोषातिप्रख्यात्रे नमः
३९७ उपशमस्थितये नमः
३९८ प्रतिबिम्बांशवादादिमततूलदवानलाय नमः
३९९ सभक्तिधर्मधर्माढ्यभक्तियोगप्रवर्तकाय नम.
४०० प्रोक्तासद्देशकालादिदोषाय नम.
४०१ निष्कपटप्रियाय नमः
४०२ सद्देशकालादिगुणज्ञापकाय नमः

४०३ सद्धर्मशंसकाय नमः
४०४ स्वधर्मशिथिलाप्रीतये नमः
४०५ भक्तकल्पमहीरुहाय नमः
४०६ धर्महीनज्ञानभक्तिदोषभू-
यस्त्वबोधकाय नमः
४०७ स्वधर्महीनपुरुषत्यागिने०
४०८ सत्यप्रतिश्रुताय नमः
४०९ बहुब्रह्मसत्राय नमः
४१० विष्णवादिपञ्चायतनमान-
नाय नमः
४११ विप्रापराधसहनाय नमः
४१२ सत्यसङ्कल्पाय नमः
४१३ आशुदाय नमः
४१४ साम्वयाधर्ममूलघ्नाय नमः
४१५ यज्ञकृते नमः
४१६ ब्राह्मणप्रियाय नमः
४१७ विष्णुस्वरूपाविष्काराय०
४१८ निर्मायाय नमः
४१९ सर्वदर्शनाय नमः
४२० जनसाहस्रयुगपत्समाधि-
स्थितिकारकाय नमः
४२१ स्वेच्छायातनरुग्योगाभ्यो-
न्यासम्मर्दसयन्नासे नमः
४२२ विप्रभोजनसंहृष्टाय नमः
४२३ विप्रारमने नमः
४२४ विप्रपूजिताय नमः
४२५ वेदैकवेद्याय नमः
४२६ दिव्याङ्गाय नमः
४२७ मेघजिद्दर्पभञ्जनाय नमः
४२८ सर्वयोगकलोद्भासिने नमः
४२९ स्वतन्त्राय नमः
४३० सर्वविदे नमः
४३१ वशिने नमः
४३२ कृष्णारमने नमः
४३३ आकृष्टहृदयाय नमः
४३४ देशिकाय नमः
४३५ दिव्यदर्शनाय नमः
४३६ गोलोकरमणाय नमः
४३७ ब्रह्मक्रीडाय नमः
४३८ वैकुण्ठनायकाय नमः
४३९ अनेकमूर्तये नमः
४४० अण्डस्थाय नमः
४४१ बहिःस्थाय नमः
४४२ योगशिक्षकाय नमः
४४३ पुरःसराय नमः
४४४ मनोवेगाय नमः
४४५ स्वनेत्रे नमः
४४६ दर्शितामराय नमः

४४७ विष्णुयागसमारम्भाय नमः
४४८ षण्मासाशितवाडवाय नमः
४४९ नानादेशगतये नमः
४५० नानायज्ञकृते नमः
४५१ भूरिदक्षिणाय नमः
४५२ सद्यःसमाधये नमः
४५३ सर्वात्मने नमः
४५४ निरीशमतखण्डनाय नमः
४५५ मकारपञ्चकोच्छेत्रे नमः
४५६ धर्मसर्गप्रपोषकाय नमः
४५७ पापिकृतान्ताय नमः
४५८ परमाय नमः
४५९ पुण्यकीर्तये नमः
४६० पृथुश्रवसे नमः
४६१ कृशोद्भवाध्वसंपोष्ट्रे नमः
४६२ साध्वीधर्मप्रवर्तकाय नमः
४६३ दैत्यांशगुरुखद्योतभास्कराय
४६४ धर्मधारकाय नमः
४६५ लोभादिदोषगदिघ्ने नमः
४६६ तामसव्रतवर्जनाय नमः
४६७ सुव्रताय नमः
४६८ सिद्धिदाय नमः
४६९ सिद्धाय नमः
४७० सिद्धेशाय नमः
४७१ सिद्धिपाय नमः
४७२ अच्युताय नमः
४७३ कौलाध्वशापदाय नमः
४७४ प्रोक्तासुरलक्ष्मणे नमः
४७५ असुरातिगाय नमः
४७६ भुजङ्गनगरानन्दाय नमः
४७७ निजभक्तस्तुताय नमः
४७८ महते नमः
४७९ अहिंसास्थापकाय नमः
४८० सूरिनिजैश्वर्यप्रदर्शकाय०
४८१ दूरदेशस्थात्मभक्तदत्तसा-
क्षात्स्वदर्शनाय नमः
४८२ सच्छास्त्रोदितसत्कीर्तये०
४८३ आत्यन्तिकगतिप्रदाय नमः
४८४ परात्पकोपकारातिस्मरणाय
४८५ सर्वभावविदे नमः
४८६ परापकारसाहस्रविस्मृतये
४८७ कोमलान्तराय नमः
४८८ पाषण्डरक्षितात्मीयाय नमः
४८९ दैत्यमोहनचेष्टिताय नमः
४९० अखण्डितार्षमर्यादाय नमः
४९१ परगुह्याप्रकाशकाय नमः
४९२ पात्रार्पितबहुद्रव्याय नमः
४९३ यथायुक्तोपदेशकाय नमः

४९४ अविग्रहप्रियाय नमः
४९५ वाणीदण्डपारुष्यवर्जिताय०
४९६ ब्रह्मण्यदेवाय नमः
४९७ देवेज्याय नमः
४९८ दशरूपप्रदर्शकाय नमः
४९९ अकुण्ठितवचसे नमः
५०० देशाचारज्ञाय नमः
५०१ अनाहतोद्धताय नमः
५०२ शिक्षार्थक्षणरूपे नमः
५०३ नित्यमैत्राय नमः
५०४ सच्छास्त्रसङ्ग्रहिणे नमः
५०५ धर्मिपक्षाय नमः
५०६ साधुसेविने नमः
५०७ पुण्यश्रवणकीर्तनाय नमः
५०८ प्रणतार्तिहराय नमः
५०९ पूज्याय नमः
५१० विषयासक्तनिन्दकाय नमः
५११ भक्तदेहान्तसमयदत्तदिव्यस्वदर्शनाय नमः
५१२ यमदूतावितस्त्रीयाय नमः
५१३ नरकार्तिनिवारकाय नमः
५१४ सन्मार्गवर्तिताशेषस्वाश्रिताय नमः
५१५ शीघ्रसिद्धिदाय नमः
५१६ अनाथरोगिवृद्धार्भभिक्षुपोषणकारकाय नमः
५१७ गूढाशयाय नमः
५१८ गूढमन्त्राय नमः
५१९ सर्वजीवाप्रतारकाय नमः
५२० भक्तासद्वासनोच्छेत्रे नमः
५२१ असदाग्रहविवर्जनाय नमः
५२२ पोष्यवर्गानुविहिततत्समानमिताशनाय नमः
५२३ आपत्कालात्यक्तनिजाय०
५२४ पञ्चकालार्चिताच्युताय०
५२५ योगेश्वराय नमः
५२६ मुनिपतये नमः
५२७ नित्यमुक्ताय नमः
५२८ महामुनये नमः
५२९ बौद्धादिनास्तिकमतखण्डनाय नमः
५३० पण्डितार्चिताय नमः
५३१ अहिंसयज्ञप्रस्तोत्रे नमः
५३२ वैष्णवक्रतुकारकाय नमः
५३३ मद्यमांससुरागन्धाघ्राणशुद्धिविधापकाय नमः
५३४ मत्तोन्मत्तखलावादिने नमः
५३५ पुरस्कृतगुणाधिकाय नमः

५३६ नानाभक्तजनानन्दाय नमः
५३७ सदसद्व्यक्तिदर्शकाय नमः
५३८ भृगुनन्दीशशापार्तजनरक्षकाय नमः
५३९ उत्तमाय नमः
५४० वेदविदे नमः
५४१ शास्त्रविदे नमः
५४२ वादिदुर्जेयाय नमः
५४३ हृतसंशयाय नमः
५४४ खड्गाङ्गात्मने नमः
५४५ हृदम्भोजध्येयाय नमः
५४६ ध्यातृमनोहराय नमः
५४७ ज्योतिःसंस्थाय नमः
५४८ अतिरम्याङ्गाय नमः
५४९ सुरेखारुणपत्तलाय नमः
५५० चार्वङ्गुलये नमः
५५१ नखेन्द्वालिप्रभापहृततहृत्तमसे नमः
५५२ पद्मकोशातिमृदुलचरणाय
५५३ सुङ्गुल्फकाय नमः
५५४ हृस्वजङ्घाय नमः
५५५ धृतजानवे नमः
५५६ समोरवे नमः
५५७ सत्सितांशुकाय नमः
५५८ गम्भीरनाभये नमः
५५९ आजानुभुजाय नमः
५६० ततभुजान्तराय नमः
५६१ कण्ठलम्बितहाराळये नमः
५६२ कम्बुकण्ठाय नमः
५६३ अरुणाधराय नमः
५६४ प्रफुल्लपद्मवदनाय नमः
५६५ कुन्ददन्ताय नमः
५६६ मितस्मिताय नमः
५६७ तिलपुष्पाभनासान्तश्यामबिन्दवे नमः
५६८ समश्रवसे नमः
५६९ वामश्रवोन्तरश्यामबिन्दवे
५७० पद्मदलेक्षणाय नमः
५७१ विशालभालतिलकाय नमः
५७२ सूक्ष्मवक्रशिरोरुहाय नमः
५७३ शिरःपटलसत्पुष्पापीडराजये नमः
५७४ स्वभक्तदृशे नमः
५७५ अवतारिणे नमः
५७६ भयघ्ने नमः
५७७ अभयराजवरप्रदाय नमः
५७८ कृतदुर्गपुरावासाय नमः
५७९ क्रोधयन्त्रे नमः

५८० अद्भुतक्रियाय नमः
५८१ नानादेशप्रेपितस्वभक्तनाशितदुष्क्रियाय नमः
५८२ असुरक्लिष्टसत्सङ्गसान्त्वनाय
५८३ साधुवल्लभाय नमः
५८४ सद्रोहिगुरुभूपालशिक्षकक्षमेशराज्यदाय नमः
५८५ गवेन्द्रार्चितपादाब्जाय नमः
५८६ गवेन्द्रवरदाय नमः
५८७ अनघाय नमः
५८८ भक्तत्रात्रे नमः
५८९ उद्धवस्वामिसम्प्रदायप्रकाशकाय नमः
५९० विप्रप्रशंसनाय नमः
५९१ तीर्थविधिबोधकाय नमः
५९२ आर्तिहर्ते नमः
५९३ विप्रसन्तर्पणाय नमः
५९४ नानाव्रतवक्त्रे नमः
५९५ महायशसे नमः
५९६ कौलोच्छिदे नमः
५९७ विजयाय नमः
५९८ वर्ण्यविष्णुयागमहोत्सवाय
५९९ भक्तिगम्याय नमः
६०० भक्तवशाय नमः
६०१ कृतदिग्विजयाय नमः
६०२ अक्षयाय नमः
६०३ भक्तिधर्मकृतानन्दाय नमः
६०४ सर्वमङ्गलदर्शनाय नमः
६०५ उत्तमात्मने नमः
६०६ जयाप्रेष्ठाय नमः
६०७ ललितेष्टवरप्रदाय नमः
६०८ मुकुन्दसेवासन्तुष्टाय नमः
६०९ जयानीतपयःपिबाय नमः
६१० नारायणघृतामत्राय नमः
६११ वासुदेवात्तचन्दनाय नमः
६१२ गोपालमर्जितामत्राय नमः
६१३ अखण्डासार्चनसाधनाय०
६१४ उमानाथाप्तपुष्पादये नमः
६१५ जयप्रक्षालितांबराय नम.
६१६ ललितासंस्कृतान्नादये नमः
६१७ पञ्चात्याललिप्तपाकभुवे नम.
६१८ अवरामार्जितावासाय नमः
६१९ शिवोपानीतपादुकाय नमः
६२० दयगोविन्दाप्तवन्याय नम.
६२१ मयरामावितामराय नमः
६२२ प्रयागोक्तपुराणादये नमः
६२३ निशानित्यकथादराय नमः
६२४ मुक्तब्रह्मस्तुतयशसे नमः

६२५ प्रेमगीतगुणश्रुतये नमः
६२६ महानुभावमुदिताय नमः
६२७ शुकरक्षितपुस्तकाय नमः
६२८ आनन्दकल्पितावासाय०
६२९ सोमसूरादिपार्षदाय नमः
६३० यथार्हकारितसेवनाय नमः
६३१ भक्तकामदुहे नमः
६३२ निबद्धोत्सवपर्यायाय नमः
६३३ विजयोत्सवतोषिताय नमः
६३४ अन्नकूटकृतानुज्ञाय नमः
६३५ महासम्भारहारकाय नमः
६३६ पत्रदूताहूतभक्ताय नमः
६३७ पाकशालावलोकनाय नमः
६३८ प्रत्युद्गतमुनिव्राताय नमः
६३९ मानिताखिलवैष्णवाय नमः
६४० सम्प्रीणनाय नमः
६४१ क्षणस्वापाय नमः
६४२ दीपालीमङ्गलाप्लवाय नमः
६४३ ब्राह्मक्षणाप्तुविहितनैत्यकाय
६४४ अखिलधर्मविदे नमः
६४५ चारुचक्रकपीठस्थाय नमः
६४६ उत्तमक्ष्मेशपूजिताय नमः
६४७ भक्तस्वेक्षाप्रदानोत्काय०
६४८ मयरामेक्षणस्मिताय नमः
६४९ भक्तसम्प्रीणनधृतनूतनांशुकभूषणाय नमः
६५० अनर्घ्यपीतकौशेयपरिधानविचक्षणाय नमः
६५१ मुकुटाकृतिसम्बद्धशोणशीर्षपटद्युतये नमः
६५२ सस्वर्णबिन्दुकौसुम्भसरुरुशुकद्युतिप्रभाय नमः
६५३ स्कन्धोल्लसद्धेमपटाय नमः
६५४ कटिबद्धारुणांशुकाय नमः
६५५ हेमाङ्गदलसद्बाहवे नमः
६५६ कर्णशोभितकुण्डलाय नमः
६५७ कण्ठलम्बितसस्वर्णमुक्ताहारालिशोभनाय नमः
६५८ चञ्चत्सुवर्णकटकशृङ्खलाभकरद्वयाय नमः
६५९ सद्रत्नखचितस्वर्णमुद्रिकाशोभिताङ्गुलये नमः
६६० सत्केसरोर्ध्वतिलकाय नमः
६६१ सरक्ताक्षतचन्द्रकाय नमः
६६२ अवतंसोल्लसत्कर्णाय नमः
६६३ चलकौसुमशेखराय नमः
६६४ सुगन्धिपुष्पहारालिदर्शनीयाय नमः

६६५ मनोहराय नमः
६६६ गजेन्द्रगमनाय नमः
६६७ अकाँशुचन्द्रहासे नमः
६६८ सितानताय नमः
६६९ उच्चरम्यासनासीनाय नमः
६७० मुनिमण्डलमध्यगाय नमः
६७१ सोमवर्मोद्धृतछत्राय नमः
६७२ मुकुन्दध्वजकाय नमः
६७३ मलयभृगुविद्वत्तदण्डचामरवीजिताय नमः
६७४ सूरनाशात्तव्यजनाय नमः
६७५ जपमालालसत्कराय नमः
६७६ उशीरचारुव्यजनकरोत्तमकृतादराय नम॰
६७७ स्वेक्षणानन्दितस्वीयाय॰
६७८ श्रुतकीर्तये नमः
६७९ निजार्चिताय नमः
६८० विप्रसात्कृतवित्तौघाय नमः
६८१ दानशूराय नमः
६८२ निरेपणाय नमः
६८३ उन्मत्तगङ्गाप्लवनाय नमः
६८४ दीपावलिमहोत्सवाय नम.
६८५ नित्यकर्मादराय नमः
६८६ नूत्नवसनाय नमः
६८७ दीनवत्सलाय नमः
६८८ सदर्चिताय नमः
६८९ अन्नकूटेक्षाय नमः
६९० रमारञ्जनभोजनाय नमः
६९१ सदाशनाय नमः
६९२ बद्धकटये नम॰
६९३ स्वभक्तपरिवेषणाय नमः
६९४ भक्तभुक्तीक्षणानन्दाय नमः
६९५ सदानन्दाय नमः
६९६ महाशयाय नमः
६९७ सत्सङ्गदीपकाय नमः
६९८ भक्तशिक्षादक्षाय नमः
६९९ उरुक्रमाय नम॰
७०० धर्मरक्षाकराय नमः
७०१ स्पर्शविवेकाय नमः
७०२ धर्मसिद्धिदाय नमः
७०३ निष्कामसिद्धिदाय नम
७०४ त्यागिसेव्याय नमः
७०५ अद्वैताय नम.
७०६ जपप्रियाय नमः
७०७ एकादशीव्रतविधिप्रवक्त्रे॰
७०८ एकादशीश्वराय नमः
७०९ प्रबोधनीव्रताचाराय नमः
७१० महादानप्रतोषिताय नमः

७११ मुनिप्रतोषाय नमः
७१२ विदुरनीतिशास्त्रप्रशंसनाय
७१३ अक्षरस्थाय नमः
७१४ मुनिमातस्तुताय नमः
७१५ योषिद्गणेडिताय नमः
७१६ भक्तयेकतोष्याय नमः
७१७ भक्तयात्मने नमः
७१८ भक्तग्राममहोत्सवाय०
७१९ घृतालयपुरावासाय०
७२० भक्तसङ्गसुखप्रदाय नमः
७२१ प्राप्तस्वबन्धुसन्मानाय नमः
७२२ भूरितर्पितपार्षदाय नम.
७२३ गङ्गार्पितफलाहाराय नम.
७२४ भक्तसङ्घसमर्चिताय नमः
७२५ नानादेशीयभक्तौघार्पितवित्तौघदानकृते नमः
७२६ भक्तभ्रातृद्वयावासपर्यायकृतभोजनाय नमः
७२७ दोलोत्सवविधानज्ञाय नम.
७२८ नरनारायणार्चकाय नम
७२९ रङ्गक्रीडनकृते नमः
७३० शुक्तकामचारनिषेधकाय०
७३१ स्त्रीपुम्प्रसङ्गमूर्यापदर्शकाय०
७३२ धर्मदेहिकाय नमः
७३३ साष्टाङ्गब्रह्मचर्यैकस्थापकाय
७३४ धर्मवित्तमाय नमः
७३५ गृहीतरनरस्पर्शदोषप्रकाशकाय नम·
७३६ स्त्रीपुंसान्योन्यसंस्पर्शव्यवस्थाकृते नम·
७३७ विद्याधराय नम·
७३८ आहारशुद्धिकृते नमः
७३९ सद्य पापनिष्कृतिकारकाय नम
७४० वेदान्ततत्त्वप्रथनाय नम.
७४१ साङ्ख्ययोगार्थदर्शकाय०
७४२ अदाम्भिकप्रियाय नमः
७४३ अतृष्णाय नमः
७४४ गुणग्राहिणे नम·
७४५ गुणप्रियाय नम·
७४६ पुराणश्रवणोत्सुक्याय नमः
७४७ पुराणविधिबोधकाय नमः
७४८ श्रीमद्भागवतश्रोत्रे नमः
७४९ श्रीमद्भागवतार्चकाय नम.
७५० श्रीमद्भागवताभिज्ञाय नम·
७५१ श्रीमद्भागवतार्पकाय नम
७५२ श्रीमद्भागवतोत्कृष्टपुरश्चरणकारकाय नमः

७५३ जन्माष्टम्युत्सवापूर्णजीवद्-
मेमनोरथाय नमः
७५४ कार्यायननरानन्दाय नमः
७५५ वास्तुवेश्मनिकेतनाय नमः
७५६ सूरसम्भावनाय नमः
७५७ दाकसंस्कारानन्दितस्व-
काय नमः
७५८ नागटङ्कजनप्रीताय नमः
७५९ शुकप्रश्नकृतोत्तराय नमः
७६० चान्द्रायणव्रताराध्याय०
७६१ पञ्चालजनपावनाय नमः
७६२ शिवरात्रिव्रताचाराय नमः
७६३ कृतदोलामहोत्सवाय नमः
७६४ द्वैताद्वैतार्थनिगमहार्दबो-
धिने नमः
७६५ महोदयाय नमः
७६६ दिव्याङ्गभक्तिधर्मादिरूपप्रे-
क्षयित्रे नमः
७६७ अमृताय नमः
७६८ हेमन्तार्चास्तुतिप्रीताय०
७६९ जीर्णदुर्गेजनार्चिताय नमः
७७० कृततीर्थविधये नमः
७७१ विप्रभोजनाय नमः
७७२ भूरिदाय नमः
७७३ अभवाय नमः
७७४ दुर्गभक्तातिसुखदाय नमः
७७५ कृतकृत्याय नमः
७७६ जगत्पतये नमः
७७७ रह:स्थाय नमः
७७८ गूढसङ्कल्पाय नमः
७७९ हरिमन्दिरकारकाय नमः
७८० महारम्भाय नमः
७८१ सदास्वस्थाय नमः
७८२ कलिदोषहरोद्यमाय नमः
७८३ कृतश्रीनगरावासाय नमः
७८४ महत्सम्भारसाधकाय नमः
७८५ श्रीपुरेशार्हिताय नमः
७८६ सभ्याय नमः
७८७ पूर्तकर्मप्रशंसकाय नमः
७८८ नरनारायणार्चासंस्थापकाय
७८९ पौरमानिताय नमः
७९० क्षेत्रमाहात्म्यगदित्रे नमः
७९१ महोत्सवविधापकाय नमः
७९२ एकाहभोजिताशेषपौरवि-
प्राय नमः
७९३ बहुप्रदाय नमः
७९४ पूजोत्सवव्यवस्थाकृते नमः
७९५ गाङ्गेयमार्थिताय नमः

७९६ मनवे नमः
७९७ भुजङ्गपुरभक्तातिप्रीताय०
७९८ पौरप्रपूजिताय नमः
७९९ नरनारायणप्रतिष्ठापकाय०
८०० विप्रपूजकाय नमः
८०१ निबद्धोत्सवमर्यादाय नम
८०२ भक्ताभीष्टफलप्रदाय नम
८०३ वृत्तालयाक्षिपद्मार्काय नमः
*८०४ शिल्पिसम्मानकारकाय०*
८०५ लक्ष्मीनारायणाद्यर्चास्थाप-
काय नमः
८०६ अर्चितभूसुराय नमः
८०७ मुक्तादिष्टोत्पथच्छेदाय नम॰
८०८ चित्रार्चाचाप्रवर्तकाय नम॰
८०९ द्वारिकाप्रेषितसुहृदे नम॰
८१० तीर्थवासप्रदर्शकाय नम.
८११ सद्यात्रे नम
८१२ द्वारिकेशात्मने नमः
८१३ भक्तापद्दर्शनाक्षमाय नम
८१४ सच्चिदानन्दवरदाय नमः
८१५ लक्ष्मीनारायणात्मकाय०
८१६ वर्धितक्षेत्रमाहात्म्याय नम
८१७ तप्तमुद्राङ्कितस्वकाय नम
८१८ मुक्तात्मने नमः
८१९ त्रियुगाय नमः
८२० वादिजेत्रे नमः
८२१ अनुयुगसम्भवाय नमः
८२२ असुराविदितेशत्वाय नम
८२३ प्रकटेश्वरलक्षणाय नम.
८२४ भक्त संशयहृद्वार्ताय नम
८२५ दुराचारविमोचनाय नम॰
८२६ अशक्ताय नम
*८२७ धिषणाशक्ताय नमः*
८२८ आसुरावेशकर्षणाय नम॰
८२९ लड्डुकादीष्टगणपाय नमः
८३० सिन्दूरादीष्टमारुतये नमः
८३१ वृत्तालयप्रियाय नम॰
८३२ धर्मजन्माद्यर्चितसद्द्विजाय
८३३ महासभासनाय नमः
८३४ दत्तविष्णुपादसुवद्धपाय०
८३५ पुत्रविन्यस्तगुरुत्वाय नम॰
८३६ पुत्रसात्कृतसच्छिवाय नमः
८३७ सदोविभक्तदेशाद्ये नमः
८३८ समाय नम॰
८३९ आचार्यशिक्षकाय नमः
८४० भक्तिजन्माद्यभक्तौघतर्प-
णाय नमः
८४१ चित्रिताधिपाय नमः

८४२ नृपामात्यार्थिताय नमः
८४३ पौरप्रीताय नमः
८४४ वटपुरागमाय नमः
८४५ मन्त्रिप्रत्युद्गताय नमः
८४६ नानावाद्यवादकसंवृताय०
८४७ सालङ्कारगजारूढाय नमः
८४८ चारुचामरवीजिताय नमः
८४९ दृक्पावितजनव्राताय नमः
८५० सिंहजिन्नृपपूजिताय नमः
८५१ स्वप्रतापपराभूतविद्वद्वैरिकृतानतये नमः
८५२ सिंहजित्संशयच्छेत्रे नम
८५३ भक्तिरीतिप्रदर्शकाय नमः
८५४ रघुवीरार्पितस्वीयभूपावित्तनवांशुकाय नम
८५५ सर्वजीवहिताय नमः
८५६ सर्वसच्छास्त्ररसदोहनाय०
८५७ अनाकुलमनसे नमः
८५८ शिक्षापत्रीलेखनकृते नम
८५९ स्वभुवे नमः
८६० सामान्यधर्मवचनाय नमः
८६१ विशेषवृषवर्णनाय नमः
८६२ निगमाद्यष्टसच्छास्त्रातिरुचये
८६३ शास्त्रसारविदे नम
८६४ विशिष्टाद्वैतमतधृते नमः
८६५ साकारब्रह्मवर्णनाय नमः
८६६ रामानुजकृतग्रन्थश्रुतिपाठप्रवर्तकाय नमः
८६७ गृहीतविठ्ठलेशोक्तव्रतोत्सवविधये नमः
८६८ सुधये नमः
८६९ यथाधिकारसद्धर्मवक्त्रे नमः
८७० वैदिकसम्मताय नम
८७१ शिक्षापत्रीस्थापितस्वमाहात्म्याय नमः
८७२ पाठसिद्धिदाय नमः
८७३ सद्धर्मातिप्रवृत्तीच्छवे नमः
८७४ शिक्षापत्रीप्रवर्तकाय नमः
८७५ प्रमोदिताश्रितजनाय नमः
८७६ नरनारायणेक्षणाय नम
८७७ महादोलोत्सवाय नमः
८७८ अयोध्याप्रसादार्पितसद्वसवे
८७९ धौरेयस्थापितश्रीमद्धामदभमोहनाय नमः
८८० पुत्रोपदिष्टश्रीकृष्णमन्त्रदीक्षाविधिक्रमाय नमः
८८१ प्रोक्तदीक्षितसद्धर्माय नमः
८८२ कृष्णपूजाविधायकाय नमः

८८३ प्रोक्तापराधनिर्हाराय नमः
८८४ क्षमासाराय नमः
८८५ सदर्चनाय नमः
८८६ स्वयाचार्यपदीशिष्यत्वस्थाप-
काय नमः
८८७ शिष्यशासनाय नमः
८८८ पुत्रदत्तमहादीक्षाय नमः
८८९ पुत्रदीक्षितपूरुषाय नमः
८९० स्नुषादीक्षितयोषाय नमः
८९१ श्रीराधाकृष्णेष्टदेवताय०
८९२ सत्सङ्गिध्येयसन्मूर्तये नमः
८९३ एकान्तिकपरायणाय नमः
८९४ पुत्रप्रोक्ताब्दिकाशेषव्रतोत्स-
वविधिक्रमाय नमः
८९५ गोपालप्रश्नसंहृष्टाय नमः
८९६ त्यागिधर्मोपदेशकाय नमः
८९७ लोभोन्मूलनधीदात्रे नमः
८९८ कामोत्खननयुक्तिदाय नमः
८९९ दुर्जयरसजिद्बोधाय नमः
९०० निःस्नेहत्वविधापकाय नमः
९०१ मानसर्पविषघात्रे नमः
९०२ कृष्णैकान्तिकशंसनाय नमः
९०३ सद्धर्मज्ञानवैराग्यभक्तिपो-
षणपाटवाय नमः
९०४ ज्ञानस्वरूपनिर्णेत्रे नमः
९०५ नियन्त्रे नमः
९०६ पुरुषात्मकाय नमः
९०७ प्रकृतीशाय नमः
९०८ महाकालाय नमः
९०९ मायेशाय नमः
९१० अव्याकृतात्मकाय नमः
९११ हिरण्यगर्भाय नमः
९१२ तत्त्वात्मने नमः
९१३ तत्त्वलक्षणलक्षकाय नमः
९१४ वैराजाय नमः
९१५ अखिलविश्वात्मने नमः
९१६ बुद्धिप्रेरकाय नमः
९१७ ईशित्रे नमः
९१८ जीवेश्वरब्रह्ममायारूपयाथा-
र्थ्यबोधकाय नमः
९१९ निर्गुणाय नमः
९२० गुणवृत्तिज्ञाय नमः
९२१ बद्धजीवविमोचनाय नमः
९२२ भक्तयाराध्याय नमः
९२३ महादेवाय नमः
९२४ ज्ञेयाय नमः
९२५ ध्येयाय नमः
९२६ प्रकाशकाय नमः

९२७ शेषीकृताक्षरपरश्रीकृष्णाय
९२८ कालकालनाय नमः
९२९ कृष्णसेवाहीनमुक्तिचतुष्के-च्छापहारकाय नमः
९३० आदिष्टसाङ्ख्यसिद्धान्ताय०
९३१ निजज्ञानफलप्रदाय नमः
९३२ अध्यात्मकाय नमः
९३३ चतुर्वर्णाश्रमधर्मनिरूपकाय
९३४ षट्कर्मविधिनिर्णेत्रे नमः
९३५ गायत्रीमन्त्रदैवताय नमः
९३६ स्मार्तवक्त्रे नमः
९३७ श्रौतवक्त्रे नमः
९३८ विप्रधर्मविशेषविदे नमः
९३९ जीविकावृत्तिनिर्णेत्रे नमः
९४० हेयोपादेयबोधकाय नमः
९४१ आशौचनिर्णयाय नमः
९४२ श्राद्धविधिवक्त्रे नमः
९४३ विधिप्रियाय नमः
९४४ कलिहेयार्थनिर्णेत्रे नमः
९४५ राजधर्मनिरूपकाय नमः
९४६ पतिव्रताधर्मवक्त्रे नमः
९४७ विधवाधर्मरक्षकाय नमः
९४८ नानाव्रतसमाराध्याय नमः
९४९ पूजाविध्युपदेशकाय नमः
९५० स्पर्शनिर्णयकृते नमः
९५१ वानप्रस्थधर्मप्रदर्शकाय०
९५२ सन्न्यासधर्मगदित्रे नमः
९५३ साङ्गनिष्कृतिबोधकाय नमः
९५४ जीर्णदुर्गस्थापितश्रीद्वारिके-शादये नमः
९५५ आत्मदाय नमः
९५६ ब्रह्मचारिधर्मवक्त्रे नमः
९५७ बृहद्धर्मब्रह्मादराय नमः
९५८ दुर्गालयस्थापितश्रीगोपीना-थाय नमः
९५९ अखिलार्थदाय नमः
९६० सहाङ्गयोगोपदेष्ट्रे नमः
९६१ पिण्डब्रह्माण्डनिर्णयाय नमः
९६२ भूतस्वरूपनिर्णेत्रे नमः
९६३ वायुभेदनिरूपकाय नमः
९६४ कालज्ञानवदाय नमः
९६५ योगसिद्धिहेतुप्रदर्शकाय०
९६६ शतानन्दस्तुताय नमः
९६७ स्तुत्याय नमः
९६८ भक्तवाञ्छितपूरकाय नमः
९६९ शिक्षापत्रीग्रन्थनकाय नमः
९७० शिक्षापत्रीविधिप्रवाचे नमः
९७१ शिक्षापत्र्यर्थसन्तुष्टाय नमः

१ १७९ पृष्ठे मूलवचने 'विधिप्रिय' इति पाठ प्रामादिक', 'विधिप्रवाक्' इत्येव तु तात्त्विक' ।

९७२ लीलासन्दर्भकारकाय नमः
९७३ निर्वासनाय नमः
९७४ तिरोधानलीलासम्मोहितासुराय नमः
९७५ वैमानिकावृताय नमः
९७६ इष्टदेववृन्दसमर्चिताय०
९७७ स्वाचांप्रादुष्कृतैश्वर्याय नमः
९७८ दत्तप्रत्यक्षदर्शनाय नमः
९७९ भक्तेक्षाहसिताय नमः
९८० पुष्पाद्युपाहर्त्रे नमः
९८१ अन्नभोजनाय नमः
९८२ क्षीरपाय नमः
९८३ नीरपाय नमः
९८४ स्वोपयाचकेष्टाशुसिद्धिदाय
९८५ पुत्रदाय नमः
९८६ वित्तदाय नमः
९८७ विद्याप्रदाय नमः
९८८ वैरिभयापहाय नमः
९८९ अपमृत्युहराय नमः
९९० भुक्तिप्रदाय नमः
९९१ मुक्तिप्रदाय नमः
९९२ आश्रयाय नमः
९९३ ऐश्वर्यदाय नमः
९९४ रोगहराय नमः
९९५ ज्ञानकृते नम
९९६ भक्तिदाय नमः
९९७ अधिपाय नमः
९९८ समाधिदाय नम.
९९९ तमोहर्त्रे नमः
१००० सर्वमङ्गलमङ्गलाय नमः

इति श्रीसर्वमङ्गलोक्तश्रीहरिसहस्रनामावली समाप्ता ।

श्रीहरिर्जयति ।

# श्रीहरिकवचम् ।

( गुर्जरानुवादसहितम् )

भक्तिधर्मात्मजं कृष्णं द्विजेन्द्रकुलभूषणम् । सावर्णिगोत्रतिलकं वन्दे सद्धर्मरक्षकम् ॥१॥ योगीन्द्रदुश्चराचार सर्वसा-

---

શ્રીહરિકવચને કહેવાનો આરભ કરતા **નિત્યાનંદમુનિ** નિર્વિઘ્નપરિસમાપ્તિમાટે શિષ્ટાચારપ્રાપ્ત ઈષ્ટદેવતાનમસ્કારરૂપ મગળને **'ભક્તિધર્માત્મજ'** ઇત્યાદિ ત્રણ શ્લોકોથી બાધેછે (તેમા પ્રથમ શ્લોકથી ભગવાનના પ્રાદુર્ભાવનુ ચરિત જણાવેછે–) જે પરબ્રહ્મ પરમાત્મા નારાયણ શ્રીકૃષ્ણ ભગવાન્ અક્ષર પરમાકાશમા સદાય નિત્યમુક્તો સાથે વિરાજમાન છે, તેજ કૃપાથી કળિયુગમા **સદ્ધર્મ–**જે પારમૈકાતિક ધર્મ અથવા સતો અને ધર્મ તેના રક્ષણ માટે, સાવર્ણિગોત્રીય દ્વિજેન્દ્રકુળને ભાલતિલકવત્ અગભૂષણવત્ પોતાના પ્રાદુર્ભાવથી અલકૃત કરવા, ધર્મદેવથકી તેમની ભાર્યા ભક્તિદેવીમા પ્રાદુર્ભાવ્યાછે તે આ **શ્રીહરિને** હુ વદન કરૂછુ ॥૧॥ હવે ધર્મરક્ષણાર્થે પ્રાદુર્ભવેલા આ ભગવાનનુ નૈષ્ઠિકબ્રહ્મચર્યવ્રતને ધારીને તપશ્ચર્યામિષથી કરેલુ જે વન વિહરણચરિત્ર તેને સક્ષેપમા જણાવતાથકા કહેછે–**યોગીન્દ્રદુશ્ચરાચાર–** જેમના યોગીંદ્રોએપણ દુશ્ચર એવા તે તે વનમા તીવ્રતપશ્ચર્યાદિ આચારો યોગીન્દ્રોનેપણ અતિશય આશ્ચર્ય કરનારા થયા હતા એવા બહુ બહુ તપસ્વિઓ કામક્રોધને વશચિત્તવાળા થઈને પોતે બહુ પ્રયાસથી સપાદન કરેલા તપોબળને ક્ષણમા ક્ષય કરી નાખેછે, તેવા આ ભગવાન નથી, આતો **સર્વસાધુગુણાલય** છે, ઉપશાતચિત્તવાળા સાધુઓના જે શમ દમ તિતિક્ષા ક્ષમા આદિક સર્વ ગુણો તેના આશ્રયભૂત છે, ત્યા ત્યા તે તે આસુરોએ બહુ પીડા પમાડતા પણ સ્વય અવિકૃતચિત્તવાળા રહીને તેમના હિતાચરણમા પ્રવર્તવાથી સાધુઓના અગ્રણી જે ગણાયા હતા **કન્દર્પદર્પદલન–**આવા

**घुगुणालयम् । कन्दर्पदर्पदलन नैष्ठिकव्रतपोषकम् ॥२॥ प्रण तार्तिहर स्वामिसहजानन्दमच्युतम् । नारायणमुनिं नौमि**

જે ભગવાનને જાણીને કામતો દૂરથીજ પલાયન કરી જાય છે તેમજ જેમની પરિચર્યાને આચરતા ભક્તોથકીપણ કામ ભય પામી રહેછે **નૈષ્ઠિકવ્રત-પોષક**–અષ્ટવિધ મૈથુનના ત્યાગરૂપ જે નૈષ્ઠિક બ્રહ્મચર્યવ્રત તેને પોતાના આચરણથી પરિપોષણ કરનારા છે આવા તે શ્રીહરિને હું નમસ્કાર કરૂંછું ॥૨॥ હવે આચાર્યપદને અનકૃત કરીને કરેલા ધર્મરક્ષણને સૂચવવા કહેછે **સ્વામિસ્હજાનંદ**–જેમનો આનદ સહજ–સ્વાભાવિક છે, જે અનન્યાધીન આનદસ્વરૂપ છે ( અર્થાત્ અનવધિકાતિશય આનદદિવ્યસ્વરૂપ છે ) અને આ સર્વના સ્વામી છે આથી–શ્રીરામાનદસ્વામીના સમાશ્રયણથી પામેલી મહાદીક્ષાના અગભૂત 'સહજાનદસ્વામી' સજ્ઞાથી વિખ્યાતતાપણ જણાવી **પ્રણતાર્તિહર** પ્રકર્ષથી જે નત તે પ્રણત કહેવાય, નમનમા પ્રકર્ષતો કાય વાણી મનથી તેની સપત્તિરૂપ અને અન્યનમનરાહિત્યરૂપ જાણવો 'ગુરૂપણે અને દેવપણે સેવ્ય એકજછે' એમ સમઝીને અન્યનમને રહિત આ તેમનુ નમન છે, કેમ ? તો તે આ ગુરૂપદમા વિરાજમાન સાક્ષાત્ ભગવાનજ છે ગુરૂને અને દેવને પૃથક્ માનનારાને અન્ય (ગુરૂ)ને નમન કરવાનુ અવશેષ રહે છે જેતો ગુરૂપણે અને દેવપણે એકનેજ ભજે છે તેને ગુરૂનમન પૃથક્ રહેતુ નથી તો ગુરૂદેવભાવથી એક ભગવાનનેજ કાય વાણી મનથી નમસ્કાર કરનારા પ્રણત જનોની આર્તિ–જે સસારદાવાનળપીડા તેને નિઃશેષ હરનારા 'निजाश्रितानां सकलार्तिहन्ता' એવી સ્વોક્તિજ છે અચ્યુત–મુમુક્ષુસમુજ્જીવનવ્રતથકી પ્રચ્યુતિ નહિ પામનારા 'यस्मात्सच्युतपूर्वोऽहमच्युतस्तेन कर्मणा' એમ પોતેજ કહ્યુછે **ભક્તિહર્ષવિવર્ધન**–આશ્રિતોની જે સ્વવિષયક ભક્તિ અને હર્ષ તેને વધારનારા અર્થાત્ આશ્રિતોના ભક્તિવિરોધિ વાસનાદોષને ટાળીને ભક્તિને સ્વય વધારનારા તેમજ સદુપદેશોવડેપણ ભક્તિને વધારનારા વળી તે તે સમયે ભક્તોને મુક્તોનાજ એક અનુભવમા આવતા દિવ્ય સ્વરૂપનો સાક્ષાત્કરા

भक्तिहर्षविवर्धनम् ॥३॥ वर्णिराजं नमस्कृत्य श्रीहरिं धर्मनन्दनम् । नित्यानन्दमुनिर्वक्ष्ये वर्म हर्यात्मकं शुभम् ॥४॥

ॐ अस्य श्रीहरिकवचस्तोत्रमालामन्त्रस्य व्यासमुनिर्ऋषिः । अनुष्टुप् छन्दः । भक्तिधर्मनन्दनः श्रीहरिर्देवता । भक्तिधर्मविवर्धन इति कीलकम् । धर्मरक्षक इति बीजम् । बृहद्व्रतधर इति शक्तिः । मम सकलमनोरथसिद्ध्यर्थे जपे विनियोगः ।

अथ करन्यासः ।

ॐ श्रीहरिकृष्णाय नमोऽङ्गुष्ठाभ्यां नमः । ॐ श्रीभक्तिधर्मात्मजाय नमस्तर्जनीभ्यां नमः । ॐ श्रीहरये नमो मध्यमाभ्यां नमः । ॐ श्रीकृष्णाय नमोऽनामिकाभ्यां नमः । ॐ श्रीनीलकण्ठाय नमः कनिष्ठिकाभ्यां नमः । ॐ श्रीस्वामिनारायणाय नमः करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ।

---

સંપાદન કરાવીને આનદને વધારનારા છે. તે આ ભક્તિહર્ષવિવર્ધન શ્રીનારાયણમુનિને હું નમસ્કાર કરૂંછું ॥૩॥

વર્ણિરાજ—અનેકવર્ણિમંડળોએ સેવાતાં છે ચરણકમળ જેમનાં એવા ધર્મનંદન ભગવાન્ શ્રીહરિને નમસ્કાર કરીને નિત્યાનન્દમુનિ નામથી ઓળખાતો હું શુભ હર્યાત્મક કવચને કહુંછુ ભગવાન્ હરિ અનેક નામોવડે અનુસ્મરણ કરતા સ્મરણ કરનારાની દુઃખાઘાતથકી સર્વથા રક્ષા કરનારા થવાથી તે પોતે કવચભાવને પામેછે માટે 'હર્યાત્મક વર્મ' એમ કહેછે સર્વ અશુભને હરે છે અને સર્વ શુભને સંપાદેછે માટે શુભ કહ્યુંછે આથી—શ્રોતાઓના મનઃસમાધાનમાટે વક્તવ્ય અર્થ અને પ્રયોજનનુ નિરૂપણ થયુ ॥૪॥

આ શ્રીહરિકવચસ્તોત્રમાળામંત્રના ઋષિ વ્યાસમુનિ છે છન્દ અનુષ્ટુપ્ છે. આ મંત્રના દેવતા 'भक्तिधर्मनन्दन' શ્રીહરિ છે કીલક 'भक्तिधर्मविवर्धन' શ્રીહરિ છે આ મત્રનુ બીજ 'धर्मरक्षक' શ્રીહરિ છે. આ મંત્રની શક્તિ 'बृहद्व्रतधर' એવા શ્રીહરિ છે. આનો વિનિયોગ મારા સમગ્ર મનોરથની સિદ્ધિનિમિત્તના જપમાં છે.

अथ षडङ्गन्यास ।

ॐ श्रीहरिकृष्णाय नमो हृदयाय नम । ॐ श्रीभक्तिधर्मात्मजाय नम शिरसे स्वाहा । ॐ श्रीहरये नम शिखायै वषट् । ॐ श्रीकृष्णाय नम कवचाय हुम् । ॐ श्रीनीलकण्ठाय नमो नेत्राभ्या वौषट् । ॐ श्रीस्वामिनारायणाय नमोऽस्त्राय फट् । इति षडङ्गन्यास ।

अथ ध्यानम् ।

श्रीकृष्ण पुरुषोत्तम वृषसुत वर्णीन्द्रमीशेश्वर तुङ्गे पीठवरे

---

મૂળમા કહ્યા પ્રમાણે કરન્યાસ અને ષડઙ્ગન્યાસને કરીને પછી ધ્યાન કરવુ તે ધ્યાનપ્રકારને નિરૂપણ કરનારો શ્લોક કહેછે શ્રીકૃષ્ણ–સદા આનદમય 'कृषिर्भूवाचक शब्दो णश्च निर्वृतिवाचक । कृष्णस्तद्भावयोगाच्च' એવી નિરુક્તિ છે જે આનદમય કહ્યા તેજ સર્વના અતરાત્મા છે આ કૃષ્ણશબ્દ અક્ષરપર પુરૂષોત્તમ પરમાત્મામા રૂઢ છે પુરુષોત્તમ–જે ક્ષર તથા અક્ષર પુરૂષ તેથકી સ્વરૂપ સ્વભાવાદિકવડે ઉત્તમ હોવાથી પુરૂષોત્તમ કહ્યા છે 'क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृत ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तम । अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम ॥' એમ ગીતામા કહ્યુછે ईशेश्वरं–સર્વેશ્વરેશ્વર અવ્યય ઈશ્વર તે આ પોતે એકજ છે (બીજાને કાળથી વ્યય પામતા ઈશ્વર છે) 'तमीश्वराणा परम महेश्वरम्' એવી શ્રુતિ છે 'बिभर्त्यव्यय ईश्वर' 'जगतामीश्वरेश्वरम्' એવી સ્મૃતિ છે वृषसुत–સાધુઓના પરિરક્ષણ માટે, દુષ્કર્મિઓના વિનાશમાટે અને ધર્મના સસ્થાપનમાટે કળિમા ધર્મદેવના સુતરૂપે પ્રાદુર્ભવેલા तुङ्गे पीठवरे સ્થિત–મહાસભામા સદ્ધર્મનો અવબોધ આપવા પોતાને અનુરૂપ સમુન્નત સર્વોત્તમ સિહાસનમા વિરાજમાન

स्थितं सुखकरं सद्भक्तवृन्दार्चितम् । कारुण्यामृतसागरं मुनिवरैः संसेविताङ्घ्रिद्वयं सेरास्यं सितसूक्ष्मवाससमहं ध्यायामि धर्मप्रियम् ॥५॥ दिशं रक्षतु मे प्राचीं पुण्यश्रवणकीर्तनः । यमदूताविताःस्वीयो दिशं मे पातु दक्षिणाम् ॥६॥ भक्तासद्वासनोच्छेत्ता पातु प्राचेतसीं दिशम् । सौम्यां दिश-

---

सद्भक्तवृन्दार्चित-सन्त -'अस्ति ब्रह्मेति चेद्वेद सन्तमेन ततो विदु' આ શ્રુતિમાં કહ્યા મુજબ સચ્છબ્દવાચ્ય જે બ્રહ્મજ્ઞાનિઓ અને भक्त - પરાનુરાગપૂર્વક નિરંતર શ્રવણકીર્તનાદિ પ્રકારોવડે ભજનારા જે જનો છે તેઓનુ જે વૃંદ તેણે પૂજા કરેલા सुखकर-સમસ્ત સમાશ્રિતોના સમ્ગ્ર સંતાપના વિનાશનપૂર્વક અપરિમિત આનંદ આપનારા कारुण्यामृत-सागरं-આશ્રિતોના દુઃખને નાશ કરવામા મુખ્ય ઉપયોગી ગુણવિશેષ જે દયારૂપ અમૃત છે તેના સાગરરૂપ मुनिवरैः-જે પોતાના દિવ્યસ્વરૂપના મનનૈકપરાયણ, ગૃહસ્થધર્મનો ત્યાગ કરી ત્યાગિદીક્ષાને પામેલા સાધુવરો છે તેમણે ससेविताङ्घ्रिद्वय-સ્નેહાતિશયથી નિત્ય સેવાતુ છે ચરણકમળયુગળ જેમનુ धर्मप्रिय-ધર્મજ એક પ્રિય જેમને છે सेरास्यं-આશ્રિતોવિષે વર્તતો જે પરમ પ્રેમ તેને સૂચવનારા મંદહાસથી શોભાયમાન મુખારવિંદ જેમનું છે શ્વેત સૂક્ષ્મ વસ્ત્રોને ધારી રહેલા એવા વર્ણીન્દ્ર શ્રીહરિનુ હું હૃદયમા ધ્યાન કરૂછુ (આ પ્રકારે ધ્યાન કરીને કવચનો પાઠ કરવો) ॥૫॥

(અહીંથી કવચનો આરંભ થાય છે) पुण्यश्रवणकीर्तन -જેમના ગુણ કર્મ નામોનું શ્રવણ અને કીર્તન પુણ્ય-પાપપ્રક્ષયકારિ અને સકળફળ દાયિ છે, એવા ભગવાન્ શ્રીહરિ પ્રાચી દિશામા મારી રક્ષા કરો-પૂર્વ દિશામા જે ભયસ્થાન તેથકી રક્ષા કરો यमदूतावितस्वीय -યમદૂતોથકી સ્વીય જનોનુ સંરક્ષણ કરનારા, એકવાર નામસ્મરણ પ્રણિપાતાદિમાત્રથી 'આ આત્મીય છે' એમ માનીને અંતસમયે સ્વસંનિધિ આપીને ભયંકર યમદૂતો થકી જે રક્ષા કરેછે તે આ શ્રીહરિ દક્ષિણ દિશામા મારી રક્ષા કરો-દક્ષિણ દિશામા જે આવતો ભય તે ટાળી નાખો ॥૬॥ भक्तासद्वासनोच्छेत्ता-

भवतु मे इच्छारामाग्रजो मुनिः ॥७॥ ईशानीं सहजानन्दो विदिशं परिरक्षतु । आग्नेयीं दिशमव्यान्मे नैर्ऋतीं हनुमत्प्रियः ॥८॥ प्रणतार्तिहरः पातु वायवीं विदिशं च मे । दिशमूर्ध्वामवतु मे सर्वमङ्गलदर्शनः ॥९॥ धार्मिकोऽधोदिशं पातु धर्मिपक्षः सुहृत्सताम् । प्रातः पातु हरिर्मां तु कृष्ण आसङ्ग-

ભક્તોની અસત્ય એવી જે વાસનાઓ (રાગદ્વેષથી સમુદ્‌ભવતી હૃદયગ્રન્થિઓ) છે તેનો મૂળમાથી ઉચ્છેદ કરનારા, ભગવાન્ ભક્તોએ અનુસ્મરણ કરતા તેમના હૃદયમા સન્નિધિ આપીને વાસનાપાશોને મૂળથી ઉચ્છેદે છે તે આ ભગવાન્ વારુણી (પશ્ચિમ) દિશામા ભયસ્થાનથકી મારુ રક્ષણ કરો **इच्छारामाग्रजो मुनि** –ઈચ્છારામ નામના ભ્રાતાના અગ્રજપણે પ્રાદુર્ભવેલા તે આ મુનિ–પોતાના આનદમય દિવ્યસ્વરૂપના મનનૈકશીલ, એવા ભગવાન્ શ્રીહરિ ઉત્તર દિશામા આવતા ભયથકી મારી રક્ષા કરો ॥૭॥ **सहजानन्द** –સહજ–સ્વાભાવિક અનવધિ આનદો જેમના છે એવા અને દીક્ષાગસજ્ઞાથી પણ સહજાનંદ એવા શ્રીહરિ ઇશાન વિદિશામા મારી રક્ષા કરો **हनुमत्प्रिय** –હનુમાનજી પ્રિય જેમને છે અને હનુમાનજીને પરમ પ્રેમવિષય જે છે, તે આ શ્રીહરિ અગ્નિ વિદિશામા તથા નૈર્ઋતી વિદિશામા મારી રક્ષા કરો ॥૮॥ **प्रणतार्तिहर** –પ્રકર્ષથી–અનન્યભાવથી નત–નમન કરનારા જનોની સમગ્ર પીડાને હરનારા (ત્રણ તાપને ટાળનારા) અથવા એકવાર 'હું તો તમારોજ છું' એમ સ્હેવાપૂર્વક પ્રણામકરણમાત્રથી તેની ઉપર પ્રસન્ન થઇને તેની સકળ પીડાને હરનારા, તે આ ભગવાન્ વાયુ વિદિશામા ભયસ્થાનથકી મારી રક્ષા કરો **सर्वमङ्गलदर्शनः**–જેમનુ દર્શન સર્વ કોઈના પણ મગળને કરનાર અને સર્વવિધ મગળને કરનાર છે એવા તે ભગવાન્ શ્રીહરિ ઊર્ધ્વ દિશામા મારી રક્ષા કરો ॥૯॥ **सतां सुहृत्**–જે સતો–કામક્રોધાદિદોષે રહિત અકામ આત્મકામો છે તેમના સુહૃત્–સુહૃદની પેઠે હિતચિંતક છે અને **धर्मिपक्ष** –જેઓ ધર્મશીલ છે તેમના પક્ષપાતમા રહેલા અને **धार्मिक** –ધર્મનેજ એક પ્રતિષ્ઠાપન કરનારા છે, તે આ ભગવાન્

वेऽवतु ॥१०॥ निरीशमतखण्डोऽव्यात्प्राह्णे धर्मप्रपोषकः । विप्रापराधसहनो मध्याह्नेऽवतु केशवः ॥११॥ ब्रह्मनिन्दाश्रवःखेदोऽपराह्णेऽवतु माधवः । विप्रात्मा भक्तवशगः सायाह्नेऽवतु दुष्टहा ॥१२॥ निशीथेऽवतु सर्वात्मा धर्मसर्गप्रपोषकः।

---

અધોદિશામા મારૂં ભયથકી પાળન કરો હરિઃ–આશ્રિતોના તમામ પાપને તથા પીડાને હરનારા તે આ શ્રીહરિ ભગવાન્ પ્રાતઃકાળમાં મારૂં રક્ષણ કરો કૃષ્ણઃ–આનંદમય શ્રીહરિ સંગવસમયમા ( સૂર્યોદયપછી છ ઘડીનો કાળ પ્રાતઃકાળ કહેવાય છે, ત્યારપછીનો છ ઘડી કાળ સંગવ કાળ કહેવાય છે ) મારી રક્ષા કરો ॥૧૦॥ निरीशमतखण्डः–નિરીશ–નિરીશ્વરવાદિઓ જે 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' એરીતે ગીતામાં કહેલા છે તેમનો જે 'अपरस्परसम्भूतं किमन्यत्कामहैतुकम्' આરીતે ગીતામા કહેલો લોકાયત ( ચાર્વાક ) મત તેનું સયુક્તિ સપ્રમાણ ખંડન કરીને સેશ્વર વાદને પ્રતિપાદન કરનારા, તે આ ધર્મપ્રપોષક ભગવાન્ શ્રીહરિ પ્રાહ્ણ ( દિવસના પ્રથમ ભાગમાં ) મારી રક્ષા કરો 'विप्रापराधसहनः–વિપ્રોનો જે અપરાધ પ્રામાદિક કે અપ્રામાદિક તેને સહન કરનારા, 'આ વિપ્રજાતિ છે' એવા શુભ અભિનિવેશને લીધે તેણે કરેલા અપરાધનેપણ સહન કરવાની પ્રકૃતિવાળા. માટેજ 'विप्रं कृतागसमपि नैव द्रुह्यत मामकाः । घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥' એમ પોતાની પ્રજાઓને ઉપદેશ કરનારા, તે આ કેશવ ભગવાન્ મધ્યાહ્નકાળે મારી રક્ષા કરો ॥૧૧॥ ब्रह्मनिन्दाश्रवःखेदः–બ્રહ્મશબ્દવાચ્ય વેદો અને તેના ધારક બ્રાહ્મણોની નિંદાના શ્રવણમાત્રથી જેમને બહુ ખેદ થાય છે એવા માધવ–લક્ષ્મીપતિ ભગવાન્ અપરાહ્ણ કાળમાં ( દિવસના અંતમાં) મારી રક્ષા કરો विप्रात्मा–વિપ્રોના આત્મા–આત્મવત્ સત્તાધારક અથવા વિપ્રો છે આત્મા–આત્મવત્ પ્રિય જેમને, અર્થાત્ જે વિપ્રપ્રિય અને भक्तवशगः–ભક્તોને વશ વર્તનારા ( अहं भक्तपराधीनो ह्यस्वतन्त्र इव स्मृतः' 'साधुभिर्ग्रस्तहृदय.' આમાં કહ્યા પ્રમાણે ભક્તાધીન પ્રવૃત્તિવાળા) છે તે આ સકળ દુષ્ટનાશક ભગવાન્ શ્રીહરિ સાયંસમયે મારી

भक्तिधर्मकृतानन्दोऽपररात्रे वृषप्रियः ॥१३॥ कृतदुर्गपुरावासोऽनुसन्ध्यं परिरक्षतु । मुकुन्दसेवासन्तुष्टो जले रक्षतु मा सदा ॥१४॥ भक्तिधर्माराधितो मा स्थलेषु परिरक्षतु । सावर्णिगोत्रतिलकः खेऽवतु नैष्ठिकाग्रणी ॥१५॥ महादुर्गे वने घोरे ह्यग्नौ वा पर्वते द्रुमे । सङ्ग्रामे सङ्कटे घोरे सागरेऽ-

---

रક્ષા કરો ॥૧૨॥ सर्वात्मा–'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'स त आत्मा अन्तर्याम्यमृत' ઈત્યાદિકમા સર્વના અંતરાત્માપણે પ્રતિપાદન કરેલા धर्मसर्गप्रपोषक–ધર્મસર્ગ જ્ઞાન વૈરાગ્ય આદિકને પ્રકર્ષેથી પોષણ કરનારા, એવા શ્રીહરિ નિશીથ ( મધ્યરાત્રિએ ) મારૂ રક્ષણ કરો भक्तिधर्मकृतानन्द–ભક્તિદેવી અને ધર્મદેવે સંપાદન કર્યો છે આનંદ જેમને, અથવા તે બન્નેને વિષે સંપાદન કર્યોછે આનંદ જેમણે એવા તે આ वृषप्रिय–વૃષ–ધર્મ જેમને પ્રિય છે એવા શ્રીહરિ અપરરાત્ર ( રાત્રિનો શેષભાગ )મા મારી રક્ષા કરો ॥૧૩॥ कृतदुर्गपुरावास–દુર્ગપુરમા વિરહાતુર અભયભૂપની પ્રાર્થનાથી અંગીકાર કર્યોછે નિયતનિવાસ જેમણે એવા શ્રીનારાયણમુનિ અનુસંધ્ય ( સંધ્યાસમીપકાળ )મા મારી પરિરક્ષા કરો मुकुन्दसेवासन्तुष्ट–મુકુંદાનંદ નામના વર્ણિવરે કરેલી નિષ્કપટ નિષ્કામ સેવાથી સંતુષ્ટ થએલા એવા ભગવાન્ મારી જળમા નિરંતર રક્ષા કરો ॥૧૪॥ भक्तिधर्माराधित–ભક્તિ અને ધર્મવડે આશ્રિતોએ આરાધન કરેલા અથવા ભક્તિધર્મ માત પિતાએ અદૃશ્ય રૂપથી અનુદિન આરાધન કરેલા, તે આ ભગવાન્ મારી સ્થળમા પરિરક્ષા કરો–સ્થળમા આવતા ભયથકી રક્ષા કરો सावर्णिगोत्रतिलक–પોતાના પ્રાદુર્ભાવથી સાવર્ણિગોત્રના તિલકવત્ અલંકારભૂત અને નૈષ્ઠિકોના અગ્રણી એવા ભગવાન્ આકાશમા આવતા ભીતિસ્થાનથકી મારી રક્ષા કરો ॥૧૫॥ મહાદુર્ગ ( કોટ કીલ્લો )મા, ઘોરવનમા, પર્વતોમા વૃક્ષોમા અગ્નિમા, સંગ્રામમા બીજા ઘોર સંકટમા અને સાગરમા સંભવતા ભયથકી स्वभू–સ્વેચ્છાથી લોકકલ્યાણકારણે મત્સ્યાદિ અનેક રૂપે પ્રાદુર્ભવતા, એવા ભગવાન્ શ્રીહરિ મારૂ રક્ષણ કરો ॥૧૬॥

वतु मां स्वभूः ॥१६॥ हरिकृष्णः शिरः पातु ललाटं भक्तिनन्दनः । धार्मिको मे मुखं पातु कर्णौ मे भक्तवल्लभः ॥१७॥ नैष्ठिकेन्द्रो हनुं पातु भ्रूयुग्मं मे वृषात्मजः । भक्तिधर्मात्मजो नेत्रे नासिकां मे तपोधनः ॥१८॥ ओष्ठौ मे सिद्धदर्पघ्नो जिह्वां

**हरिकृष्ण** –સમાશ્રિતોના સમસ્ત દુઃખ દુષ્કૃતને હરનારા હોવાથી હરિ અને સ્વયં નિરવધિ આનંદસ્વરૂપ હોઇને સર્વને આનંદ આપનાર હોવાથી કૃષ્ણ મળીને હરિકૃષ્ણ ( સમગ્ર દુઃખ હરવાપૂર્વક નિરવધિ નિત્ય આનંદ આપનારા ) એવી સાર્થકસંજ્ઞાથી સુપ્રસિદ્ધ એવા ભગવાન્ મારા મસ્તકનું રક્ષણ કરો **भक्तिनन्दन** –ભક્તિમાતાને બાળલીલાવડે આનંદ આપનારા, તે આ ભગવાન્ મારા લલાટનું રક્ષણ કરો **धार्मिक** –ધર્મમાંજ એક પ્રીતિવાળા, એવા ભગવાન્ મારા મુખની રક્ષા કરો **भक्तवल्लभ** –જેમને ભક્તો બહુજ વહાલા છે એવા ભગવાન્ મારા કર્ણની રક્ષા કરો ॥૧૭॥ **नैष्ठिकेन्द्र** –નૈષ્ઠિકોમાં શ્રેષ્ઠ એવા શ્રીહરિ મારી હનુ ( કપોળથકી નીચેનો ભાગ જેને જડબું કહેછે )ની રક્ષા કરો **वृषात्मज** –વૃષ–ધર્મના આત્મજરૂપે પ્રાદુર્ભવેલા, તે આ ભગવાન્ મારી ભ્રૂકુટિયુગળની રક્ષા કરો **भक्तिधर्मात्मज** –ભક્તિધર્મના પુત્રરૂપે પ્રકટ થએલા ભગવાન્ મારા નેત્રની રક્ષા કરો **तपोधन** –તપજ ધન જેમને છે એવા ભગવાન્ મારી નાસિકાનું રક્ષણ કરો આ શિષ્ટાનુગ્રહ અને દુષ્ટનિગ્રહ માટે પ્રાદુર્ભવેલા ભગવાનને તેમાં તપશ્ચર્યાંજ સાધન છે માટે **તપોધન** કહ્યા છે સમસ્ત જગતને સર્જતા ભગવાનને તેમાં **તપ** સંકલ્પ માત્રજ સાધન છે, આ કારણથી પણ **તપોધન** કહેવાય તેમાં 'स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत' એવી શ્રુતિ છે ॥૧૮॥ **सिद्धदर्पघ्न** –વનવિચરણપ્રસંગે સીરપુરમાં આવતા ત્યાંના સિદ્ધવલ્લભ રાજાએ આગ્રહથી ત્યાં રાખતાં, ત્યાં તે રાજાએ પોતાના કોટમાં રાખેલા સિદ્ધો–ક્ષુદ્ર સિદ્ધિવિશેષને પામેલા જે સિદ્ધાભાસો હતા તેમના 'અમોજ સાચા દ્વન્દ્વાતીત સિદ્ધો છીએ' એવા ગર્વને પોતાના દિવ્ય અદ્ભુત ઐશ્વર્યના દર્શનથી હરનારા, ( આથી તે તે સ્થળે કરેલો દુષ્ટનિગ્રહ જણાવ્યો ) એવા ભગવાન્

पातु महामुनिः । पातु दन्तान्नीलकण्ठः कपोलौ प्रियदर्शनः ॥१९॥ हरिप्रसादहर्षाब्धिः कण्ठं पातु सदा मम । स्कन्धौ मे रक्षतु स्वामी भुजौ मे निर्जितेन्द्रियः ॥२०॥ कूर्परौ मे करौ पातु कराग्राणि च सामगः । रामप्रतापावरजो हृदयं पातु सर्वदा ॥२१॥ योगीन्द्रदुश्चराचारः कुक्षी पातु महामतिः । उरःस्थलं महायोगी धर्मपत्नीस्तनन्धयः ॥२२॥ कन्दर्पदर्प

મારા ઓષ્ઠનુ રક્ષણ કરો મહામુનિ –આત્મસ્વરૂપના મનનશીલ મુનિઓ મધ્યે આ મહાન્ છે કેમ? તો આ સર્વના અન્તરાત્મભૂત સ્વાત્માના મનનશીલ છે, આવા તે ભગવાન્ મારી જીહ્વાનુ રક્ષણ કરો. નીલકણ્ઠ –જ્ઞાન વૈરાગ્ય તપાદિ ગુણયોગે કરીને નીલકંઠ–મહાદેવને તુલ્ય હોવાથી નીલકંઠ નામથી વ્યવહરાતા તે આ ભગવાન્ મારા દાંતોનુ રક્ષણ કરો પ્રિયદર્શન – જેમનુ દર્શન સર્વકોઇને પરમ પ્રિય છે એવા ભગવાન્ મારા કપોળની રક્ષા કરો ॥૧૯॥ हरिप्रसादहर्षाब्धि –હરિપ્રસાદ જેમનુ અપર નામ છે એવા ધર્મદેવને અપાર હર્ષ આપનાર હોવાથી હર્ષાબ્ધિપણે કહેલા એવા ભગવાન્ મારા કંઠની નિરંતર રક્ષા કરો स्वामी–આ સર્વ ચરાચર જગતના નિરૂપાધિક પતિ હોવાથી **સ્વામિશબ્દથી** કહેલા તે આ ભગવાન્ મારા ખભાનુ રક્ષણ કરો निर्जितेन्द्रिय –સકળ ઇન્દ્રિયોને જીતીને આત્મસન્મુખ રાખનારા તે આ શ્રીહરિ મારા ભુજની રક્ષા કરો ॥૨૦॥ सामग –સામશાખાધ્યાયિના કુળમા પ્રાદુર્ભવેલા માટેજ **સામગ** એમ ખ્યાત થએલા તે આ શ્રીહરિ મારા કૂર્પર, (કુણી) કર અને કરાગ્ર (આગળીયો)ની રક્ષા કરો रामप्रतापावरज રામપ્રતાપના કનિષ્ઠભ્રાતાપણે પ્રાદુર્ભવેલા તે આ ભગવાન્ મારા હૃદયની સર્વદા રક્ષા કરો ॥૨૧॥ योगीन्द्रदुश्चराचार યોગીન્દ્રોએ પણ દુશ્ચર છે તપાદિ આચરણ જેમનુ એવા **મહામતિ** ભગવાન્ મારી કુક્ષી (બે કુખ)ની રક્ષા કરો महायोगी સર્વ યોગીઓની અપેક્ષાએ જે મહાન્ યોગેશ્વરેશ્વર છે તે આ ધર્મપત્ની ભક્તિમાતા (અથવા શ્રદ્ધાદિ અપર માતાઓ)ના સ્તન્યને પાન કરનારા ભગવાન્ મારા ઉર સ્થળનુ રક્ષણ કરો ॥૨૨॥

ल्नो जठरं पातु धर्मजः । स्वामिनारायणो नाभिं भक्तकल्पमहीरुहः ॥२३॥ कृशोद्धवाध्वसम्पोष्टा पार्श्वौ मे पातु सर्वथा । नारायणमुनिः पृष्ठं सत्सङ्गिजनवल्लभः ॥२४॥ वर्णिराजः कटिं पातु सर्वसाधुगुणालयः । साधुप्रियोऽवतु गुह्यं सक्थिनी भक्तवश्यगः ॥२५॥ ऊरू ब्रह्मण्यदेवो मे जानुनी धर्मधारकः ।

कन्दर्पदर्पदलन.–કામના સમસ્ત જગતના જયથી ઉપજેલા ગર્વને દળનારા, તે આ ધર્મજન્મા ભગવાન્ મારા ઉદરની રક્ષા કરો ભક્તકલ્પમહીરુહः–ભક્તોના કલ્પવૃક્ષની પેઠે અપેક્ષિત અખિલ અર્થને આપનારા સ્વામિનારાયણ ભગવાન્ મારી નાભિની રક્ષા કરો (જે આ ચરાચર સમસ્ત જગતને નિયમમા કરેછે તેજ આ સર્વના સ્વામી-પતિ કહેવાય, અંદર બહાર વ્યાપીને જે વર્તેછે તેજ નારાયણ કહેવાય, તેમા 'पतिं पतीनां' 'विश्वस्य पति.' 'एव भूतपति.' 'एक एव हरि. स्वामिशब्दवाच्योऽस्ति सर्वथा' 'अतर्बहिश्च तत्सर्वं व्याप्य नारायण. स्थित.' એવી શ્રુતિ સ્મૃતિ છે, તો આ બન્ને નામ મળીને એક સાર્થક સ્વામિનારાયણ નામ થયુ આ નામનો આટલો તત્વાર્થ છે ) ॥૨૩॥ कृशोद्धवाध्वसम्पोष्टा–દુર્ગ–આસુરબળથી પરાભવ પામેલા ઔદ્ધવ સત્સંપ્રદાયની પુષ્ટિ કરનારા, તે આ ભગવાન્ મારા પાર્શ્વ–બે પડખાના ભાગની રક્ષા કરો सत्सङ्गिजनवल्लभ –સમગ્ર સત્સંગિજનોને પ્રિયતમ અથવા સત્સંગિજનો પરમ પ્રિય જેમને છે એવા તે આ નારાયણમુનિ મારા પૃષ્ઠભાગની રક્ષા કરો ॥૨૪॥ सर्वसाधुगुणालयः–જીતેન્દ્રિય આત્મારામ સાધુઓના જે શમ દમ ક્ષમાદિ સર્વે ગુણો તેના આસ્પદભૂત અથવા સર્વ જે સાધુગુણો-કલ્યાણગુણો તેના આલયભૂત એવા તે આ વર્ણિરાજ ભગવાન્ મારી કટિની રક્ષા કરો साधुप्रिय –સાધુઓને પ્રિય અને સાધુઓ પ્રિય જેમને છે એવા ભગવાન્ મારા ગુહ્ય અંગની રક્ષા કરો भक्तवशग –ભક્તોને અધીન સમસ્ત પ્રવૃત્તિવાળા આ ભગવાન્ મારા સક્થિની ( સાથળનો ઉપલો ભાગ ) રક્ષા કરો ॥૨૫॥ ब्रह्मण्यदेवः–બ્રહ્મ-બ્રાહ્મણના હિત તે બ્રહ્મણ્ય કહેવાય, અથવા બ્રહ્મ-વેદના હિત તે બ્રહ્મણ્ય

**रुयङ्गगन्धासहो जङ्घे गुल्फौ मे धर्मनन्दन. ॥२६॥ भक्तिहर्षप्रद' पातु पादौ पादाङ्गुलीस्तथा । सर्वाङ्गानि भयत्राता रोमाणि पातु मे विभुः ॥२७॥ नानाभक्तजनानन्दः पातु सर्वेन्द्रियाणि मे । प्राणान्पातु हृषीकेशश्चित्तं मे माधवोऽवतु**

કહેવાય તેવા જે દેવ તે **બ્રહ્મણ્યદેવ** કહેવાય એવા ભગવાન્ મારા ઊરૂ (સાથળનો નીચેનો ભાગ)ની રક્ષા કરો **धर्मधारक** –ધર્મના આચરણ પ્રચારણદ્વારા ધારક એવા ભગવાન્ મારા ઢીંચણની રક્ષા કરો **स्त्र्यङ्गगन्धासह**–સ્ત્રીના અંગસંગિ ગંધનેપણ નહિ સહન કરનારા, (વિષયવિમુખ) તે આ ભગવાન્ મારી જંઘાનું રક્ષણ કરો **धर्मनन्दन** –પિતા ધર્મદેવને પોતાના પ્રાદુર્ભાવથી આનંદ આપનારા, તેઆ ભગવાન્ મારી ઘુંટીની રક્ષા કરો ॥૨૬॥ **भक्तिहर्षप्रद** –માતાભક્તિને હર્ષ આપનારા, તે આ ભગવાન્ મારા પાદ અને તેની આંગળીયોની રક્ષા કરો **भयत्राता**–સમસ્ત ભયથકી રક્ષણ કરનારા ભગવાન્ મારા સર્વ અંગોની રક્ષા કરો **विभु** –જે સંકલ્પમાત્રથી સર્વમાં સર્વદા વ્યાપીને વર્તેછે, એવા ભગવાન્ મારા રોમનું રક્ષણ કરો ॥૨૭॥ **नानाभक्तजनानन्द** –અનેક ભક્તજનોને ત્યાં ત્યાં સન્નિધિ આપીને પોતાના દિવ્ય સ્વરૂપના દર્શનદાનથી આનંદ આપનારા, તે આ ભગવાન્ મારી સમગ્ર ઇન્દ્રિયોની રક્ષા કરો **हृषीकेश** –હૃષીક–ઇન્દ્રિયોના **ઈશ**–નિયંતા તે **હૃષીકેશ** કહેવાય. તેમાં **'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं प्राणस्य प्राणश्चक्षुषश्चक्षु '** એવી શ્રુતિ છે **'हृषीकाणीन्द्रियाण्याहुस्तेषामीशो यतो भवान् । हृषीकेशस्ततो विष्णु ख्यातो देवेषु केशव ॥'** આવી સ્મૃતિ છે તો ઇન્દ્રિયોના અધીશ હોવાથી હૃષીકેશનામથી નિરૂપેલા ભગવાન્ મારા પ્રાણોની રક્ષા કરો **माधव** –મા–લક્ષ્મીના **ધવ**–પતિ તે **માધવ** (શ્રીપતિ) કહેવાય **'श्रिय श्रद्धादिनाम्न्याश्च पतिर्माधव इष्यते'** એવી નિરૂક્તિ છે અથવા **મા**–નથી **ધવ**–સ્વામી જેનો (જેનો કોઇ પણ ઉપરી ધણી નથી) માટે **માધવ** કહ્યા છે **'न तस्येशे कश्चन' 'न तस्य लोके पतिरस्ति'** એવી શ્રુતિ છે આ રીતે અન્વર્થ **માધવ**નામથી નિરૂપણ

॥२८॥ नरनारायणो बुद्धिं मनो मेऽवतु केशवः । वृन्दावनेन्दुरात्मानं पातु मे धर्मवल्लभः ॥२९॥ जितनिद्रः प्रमादाच्च निद्रायाः पापमूलतः । सर्वश्रेयोविनाशिन्याः पातु दारिद्र्यमातृतः ॥३०॥ सच्छास्त्रानुगतप्रज्ञो गर्वान्नारायणोऽवतु ।

---

करेला भगवान् भाग चित्तनी रक्षा करो ॥२८॥ **नरनारायणः**–पूर्वे धर्मभूर्तिथकी तेमनी प्रार्थनाथी 'नर' 'नारायण' एवा द्विरूपथी धर्माश्रममां प्रादुर्भवीने पछी बदरीकाश्रममां आवी वसेला, ते आ भगवान् मारी बुद्धिनी रक्षा करो. **केशवः**–'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसम्भूतौ तस्मात् केशवनामवान्' 'प्रशस्तनीलकेशत्वात् केशवः परिकीर्तितः' आ निरुक्तिने अनुसारे भवब्रह्मादिकना उत्पादक अथवा प्रशस्त नीलकेशवाळा, ते आ श्रीहरि मारा मननी रक्षा करो. **वृन्दावनेन्दुः**–वृन्दावनना इन्दु–चंद्रवत् अलंकरणभूत, एवा **धर्मवल्लभ** भगवान् मारा आत्मानी रक्षा करो ॥२९॥ **जितनिद्रः**–निद्रा जेमणे जीती छे एवा भगवान् पापमूळ प्रमादथकी अने निद्राथकी मारी रक्षा करो ते बन्ने तमनुं कार्य छे, कृत्यनुं अकरण अने अकृत्यनु जे करण तेमा ते बन्ने कारण छे, माटे तेमनुं पापमूलत्व युक्त छे. **सच्छास्त्रानुगतप्रज्ञः**–स्वाभिमत वेदादि सच्छास्त्रनेज अनुसरनारी (सच्छास्त्रथकी विरुद्ध नहि) **प्रज्ञा**–बुद्धि जेमनी छे, एवा भगवान् सर्व श्रेयने विनाश करनारी दारिद्र्यरूप माताओ ( मातृकादि बाळ ग्रहो कहाछे ) थकी मारी रक्षा करो दारिद्र्यथी पराभव पामी गएलो जन बहुधा यज्ञ दांन तपादि श्रेय कर्मोथकी भ्रष्ट थायछे अने असत्प्रतिग्रहादि कने करेछे, माटे सर्व श्रेयनुं विनाश करवापणुं दारिद्र्यमां कह्यु ते युक्त छे **नारायण**–'नारायणाय विद्महे' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'नारायणः परंब्रह्म' 'एको ह वै नारायण आसीत्' 'अथ दिव्यो देव एको नारायणः' आरीते प्रत्येक शाखामां परवस्तुनुं अन्य भवब्रह्मादि मूर्तिओथकी व्यावृत्ति करनारु असाधारण नाम होवाथी **नारायणशब्दथी** निर्देश कराता, ते आ भगवान् श्रीहरि गर्वथकी मारी रक्षा करो. **योगेश्वरः**–

योगेश्वरो योगभ्रंशात्कर्मबन्धान्मुनीश्वरः ॥३१॥ निष्कामः पातु मां कामात्सर्वश्रेयोविघातकात् । क्रोधदावानलात्पातु जितक्रोधो दयालय ॥३२॥ लोभादिदोषगदिता मां पातु लोभलुब्धकात् । रक्षतु मां जितस्वादः प्रबलाद्रसनेन्द्रियात् ॥३३॥ निर्मानोऽवतु मां मानात्सर्वसद्गुणदूषणात् । स्पृहाया

---

'पश्य मे योगमैश्वर' 'यत्र योगेश्वर कृष्ण' 'योग योगेश्वरात्कृष्णात्' 'महायोगेश्वरो हरि' ઈત્યાદિકથી યોગેશ્વરપણે નિરૂપણ કરેલા, તે આ ભગવાન્ યોગભ્રંશથકી મારી રક્ષા કરો મુનીશ્વર –આત્મમનનશીલ મુનિઓના ઇશ્વર એવા શ્રીહરિ કર્મબન્ધથકી મારી રક્ષા કરો ॥૩૦-૩૧॥ निष्काम – સર્વદા કામે રહિત એવા ભગવાન્, કામ કે જે આભ્યતર પ્રબળ શત્રુ હોઇને શ્રેયમાત્રનો વિનાશક અને અનર્થમાત્રનો સંપાદક છે તેથકી મારી રક્ષા કરો जितक्रोध –ક્રોધ જીતીને વર્તતા દયાલય તે આ ભગવાન્ ક્રોધદાવાનળાત્ સમુદ્ભવેલો ક્રોધ દાવાનળની પેઠે દગ્ધ કર્યા વિના શમતો નથી માટે આ અતિભયાનક ક્રોધથકી મારી રક્ષા કરો ॥૩૨॥ लोभादिदोषगदिता– લોભાદિ પાંચના દોષો–જે વસિષ્ઠાદિ મોટાઓનીપણ દુર્દશા કરનારા ત્યાજ્ય અવગુણો છે તેને તેમના તેમના ઇતિહાસોવડે પૃથક્ પૃથક્ નિરૂપણ કરનારા, એવા તેભગવાન્ लोभलुब्धकात्–જે લોભ છે તે લુબ્ધક (પારધી)ની પેઠે પરહિંસામાજ એક રૂચિ કરાવનારો છે, તો તેથકી મારી રક્ષા કરો जितस्वाद – સર્વદા નિસ્વાદ એવા ભગવાન્ પ્રબળ રસના ઇન્દ્રિયથકી મારૂ રક્ષણ કરો ઇન્દ્રિયોમા રસનેન્દ્રિય પ્રબળ છે, ચક્ષુરાદિની પટુતા કાળે કરીને મળી જાય છે પણ જાની તો કયારેયપણ ટળતી નથી, જીહ્વા એક તરૂણ થતી જાય છે માટેજ 'जित सर्वं जिते रसे' એમ કહેછે, રસનાપારવશ્યને લીધે અભક્ષ્ય ભક્ષણ અપેયપાનમા પ્રવર્તના મલિન મનવાળો થઈ જાય છે 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति' એવી શ્રુતિ છે ॥૩૩॥ निर्मान –સર્વદા અભિમાને રહિત, એવા તે ભગવાન્ સર્વ સદ્ગુણોના દૂષણરૂપ માનથકી મારૂ રક્ષણ કરો જે અવિદ્યાવિરોધિની વિદ્યા છે તેપણ માનથી દૂષિત થઇ

निःस्पृहः पातु सर्वेदुःखपयोनिधेः ॥३४॥ निःस्नेहोऽवतु मां स्नेहाद्देहदैहिकसम्भवात् । निर्मदो मदसर्पान्मां पातु सन्मार्गभ्रंशकात् ॥३५॥ दम्भात्पातु दम्भहीनः सन्मण्डलपरायणः ।

જાયછે, વૈરાગ્યપણ તેના અભિમાનથી દૂષિત થાયછે, કિં બહુના-બીજા જે જે ગુણો છે તે સર્વેપણ તે તે ગુણના કરેલા અભિમાનથી દૂષિતજ થઇ જાય છે માટેજ વિદુરજી 'સર્વમેવાભિમાન '-અભિમાન તો સર્વને નાશ કરેછે એમ કહેછે, તો આવા અતિદુષ્ટ માનથકી મારી રક્ષા કરો નિઃસ્પૃહ -અવાપ્ત સમસ્તકામ હોવાથી સ્પૃહાએ રહિત એવા ભગવાન્ સર્વ દુઃખના સાગરભૂત એવી સ્પૃહાથકી મારી રક્ષા કરો જે આશા છે તે કદાપિ અશોષ્ય અગાધ સાગર છે, તેમા કોટિબ્રહ્માંડો અંદર નાખે તોપણ પુરાય એવો નથી, 'तृष्णासरिरगाधेय दुष्पुरा केन पूर्यते' એવી સ્મૃતિ છે, બ્રહ્માંડનુ આધિપત્ય મળે તોપણ તેથી બીજા મોટા પદને ઇચ્છેજ છે, આ સાગર દુઃખમય છે, વિષયો નહિ મળતા પણ આગળ આગળ દોડી જતી આશા દુઃખરૂપેજ પરિણામ પામેછે, તો આ દુઃખસાગર આશાથકી મારી રક્ષા કરો ॥૩૪॥ નિઃસ્નેહ - ભગવાન્ અને તેમના ભક્તોથકી ઇતરવસ્તુમાત્રમા સ્નેહાસક્તિએ રહિત એવા ભગવાન્ દેહદૈહિકમા સભવતા સ્નેહથકી મારી રક્ષા કરો મળમય આ દેહ સજ્ઞિત પિંડમા તથા તેના અનુબન્ધી પત્નીપુત્રાદિસજ્ઞિત પિંડવિશેષમા જે સ્નેહ થાય છે તે આ સ્નેહ દુઃખકાદવમા પુરુષને પાડેછે, તો આનાથકી મારૂ રક્ષણ કરો નિર્મદ -મદે રહિત એવા શ્રીહરિ મદરૂપ સર્પ કે જે સન્માર્ગથકી ભ્રષ્ટ કરનાર છે તેથકી મારી રક્ષા કરો સર્પજ જેમ એમ મદવાળો જન સર્વને ઉદ્વેગ કરનારો થાયછે મદોદ્ધત જનથકી ભય પામીને સર્વકોઇ પુરૂષ દૂર ખશી જાય છે, વળી મદ પુરૂષને અવતા લાવેછે, તેનાથી આ જન સન્માર્ગ થકી ભ્રષ્ટ થાય છે અને કુમાર્ગમા જાયછે તેથકી પ્રસ્ખલિત થતા મહાગર્તમા ક્યાંક પડીને નષ્ટ થઈ જાયછે માટે આ રીતે આ અનર્થંકર મદસર્પથકી મારૂ રક્ષણ કરો ॥૩૫॥ सन्मण्डलपरायण -સતમડળો જેમને પરાયણ-પર-ઉત્તમ અયન-આશ્રય છે યદ્યપિ સ્વય સતમડળોના પરઅયન-પ્રાપ્યપ્રાપક છે

निर्मत्सरो मत्सरान्मां रक्षतु वृषनन्दनः ॥३६॥ स्थितं व्रजन्तमासीनं पिबन्तं भक्षतं हरिः । भक्तिधर्मकृतानन्दः शयानं पातु दुःखहा ॥३७॥ प्रमत्तमप्रमत्तं वा पतन्तं स्खलितं तथा । छिक्कयन्तं जृम्भमाणं निद्रितं तन्द्रिसंयुतम् ॥३८॥ गृहान्तरगतं द्वाःस्थं ये मां बाधितुमुद्यताः । तान्सर्वान्नाशयत्वाशु सर्वयन्ताऽद्भुतक्रियः ॥३९॥ मकारपञ्चकोच्छेत्ता पातु दुःसङ्गतः सदा । कौण्डनास्तिकशाक्तेभ्यः शुष्कज्ञानिभ्य एव माम्

---

तथापि સતોવિષે વર્તતા પ્રીતિપ્રકર્ષને લીધે તેમનુ મડળ એમને અયન-પ્રાપ્ય જેવુ થાયછે 'ज्ञानी त्वात्मैव मे मतम्' એમ ગીતામા પોતેજ કહ્યુ છે અથવા સતમડળોના પરાયણ-પ્રાપ્યપ્રાપકપણે ઉત્કૃષ્ટ આશ્રયભૂત, તે આ સન્મડળપરાયણ દભહીન ભગવાન્ દભથકી મારૂ રક્ષણ કરો જે દભ છે તે મિથ્યાચારનુ મૂળ છે અને અર્થની હાનિમાટે તથા અનર્થની પ્રાપ્તિમાટે થાય છે निर्मत्सर —મત્સરે રહિત એવા વૃષનદન ભગવાન્ મત્સરથકી મારી રક્ષા કરો ॥૩૬॥ भक्तिधर्मकृतानन्द —દિવ્યરૂપથી પોતાની સનિધિમા રહેલા ભક્તિ ધર્મને આનદ કરનારા અને દુ खहा—સર્વ દુખને હરનારા એવા શ્રીહરિ સ્થિતિ-ગમન-આસન-પાન-અશન-શયનાદિ ક્રિયાઓમા મારી રક્ષા કરો ॥૩૭॥ सर्वयन्ता—સર્વેના અતરમા પ્રવેશ કરીને નિયમન કરનારા અને अद्भुतक्रिय —અત્યાશ્ચર્યકારિ દિવ્ય ચરિત્રો જેમના છે એવા ભગવાન્, પ્રમત્ત કે અપ્રમત્ત દશામા વર્તતા, માર્ગમા પડી જતા કે ઠેસો ખાતા, છિક ખાતા કે બગાસુ ખાતા, નિદ્રાવશ કે આળસવશ, ગૃહની અભ્યતર રહેલા કે ગૃહદ્વારમા રહેલા મને જેઓ દુખ દેવા ઉદ્યમી છે તે સર્વેને તત્ક્ષણ નાશ કરો સર્વ અવસ્થાઓમા મારી રક્ષા કરો એવુ તાત્પર્ય છે ॥૩૮ ૩૯॥ मकारपञ्चको च्छेत्ता—કૌલાગમમા મદ્ય-માસ-મત્સ્ય-મુદ્રા મૈથુન, આ પચમકારશબ્દ વાચ્ય પ્રસિદ્ધ પાપો છે, તેમા યથેષ્ટ પ્રવર્તેલા કૌલો ( વામમાર્ગીઓ )ને દોષ પ્રદર્શનથી તેનો ત્યાગ કરાવાપૂર્વક સન્માર્ગમા પ્રવર્તાવનારા, તે આ શ્રીહરિ દુ સગથકી તથા કૌણ્ડ-નાસ્તિક-શાક્તથકી અને શુષ્કજ્ઞાનિઓથકી વિશેષત.

॥४०॥ अज्ञानाज्ज्ञानदः पातु कृष्णभक्त्यपराधतः । सन्मण्ड-
लावासरुचिः पातु मां योगवित्तमः ॥४१॥ देवापराधतो मार्गे
मां पातु धर्मवित्तमः । सदाचारच्युतेरव्याद्भक्तिधर्मनिषे-
वितः ॥४२॥ कलेः कालमलात्पातु द्विजेन्द्रकुलभूषणम् ।
जनापवादतो भक्तिधर्माराधितपत्कजः ॥४३॥ देहाभिमानतो

---

મારી નિરંતર રક્ષા કરો ॥૪૦॥ ज्ञानद –આત્મપરમાત્મસ્વરૂપના યથાસ્થિત જ્ઞાનને ઉપદેશનારા, અથવા 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' આમાં કહ્યા મુજબના બુદ્ધિયોગને આપનારા, તે આ ભગવાન્ અજ્ઞાનથકી મારી રક્ષા કરો सन्मण्डलावासरुचि –તીવ્ર વૈરાગ્યબળને લીધે એકત્ર સ્થિતિમાં ઉદાસીન છે છતાંપણ સત્સંગમાં અતિરુચિ હોવાથી સાધુઓના મંડળોમાંજ રહેવાની રુચિવાળા અને योगवित्तम.–યોગને જાણનારાઓને મધ્યે શ્રેષ્ઠ એવા તે આ ભગવાન્, કૃષ્ણની નવધા ભક્તિ કરવામાં પ્રમાદથી થતા જે અપરાધો (વાહનમાં બેસીને કે પાદુકા પહેરીને ભગવન્મંદિરમાં જવું, મંદિરમાં ઉંચે આસને બેસવું વિગેરે) તેથકી મારી રક્ષા કરો ॥૪૧॥ धर्म-वित्तम –ધર્મવિદોમાં વરિષ્ઠ એવા ભગવાન્ માર્ગમાંજ દેવાલયાદિકને જોઇને તેમાં રહેલા દેવાદિકને નમસ્કાર દર્શનાદિક નહિ કરવારૂપ અપરાધથકી મારી રક્ષા કરો भक्तिधर्मनिषेवित –દિવ્ય દેહથી સંનિધિમાં રહેલા ભક્તિ ધર્મે એકપગે ઉભા રહી સૂર્યોપસ્થાન કરવાને સમયે અનિષ્ટશરીર તેમની ભૂપાતશંકાને લીધે વામ દક્ષિણ ભાગમાં રહીને હસ્તાવલંબ આપવાવડે સેવા કરેલા, તે આ ભગવાન્ સદાચારચ્યુતિથકી મારી રક્ષા કરો ॥૪૨॥ द्विजेन्द्रकुलभूषण–દ્વિજેન્દ્ર જે હરિપ્રસાદ વિપ્ર તેમના કુળના ભૂષણવત્ શોભાતિશય કરનારા, એવા તે ભગવાન્ કળિકાળબળને લીધે સમુદ્ભવતા મળથકી મારી રક્ષા કરો भक्तिधर्माराधितपत्कज –ભક્તિધર્મે આરાધ્યાં છે ચરણકમળ જેમનાં, એવા તે શ્રીહરિ મારી જનાપવાદથકી રક્ષા કરો ॥૪૩॥ भक्तिधर्मतप फल–ભક્તિધર્મે ભગવત્પ્રાપ્ત્યર્થે કરેલા કૃચ્છ્રવ્રતાદિકના ફળભૂત દર્શન જેમનું છે અથવા જે આ તપ ધર્મ અને ભક્તિના ફળભૂત છે તે આ

रक्षेद्भक्तिधर्मतपःफलम् । मोहात्कुतर्कतः पातु स्वप्रतापक्षितासुरः ॥४४॥ निर्द्वन्द्वो द्वन्द्वतः पातु सुखदुःखादिसंज्ञकात् । तृष्णामहार्णवात्पातु निष्परिग्रह ईश्वरः ॥४५॥ ग्रहेभ्यः पातु विप्रेन्द्रः सर्वग्रहभयङ्करः । केतुभ्यः क्रूरदृष्टिभ्यो योगी योगज्ञसन्नतः ॥४६॥ शारीरान्मानसाद्दुःखादाधिव्याधिसमाह्वयात् । ऊर्ध्वरेता हि मा पातु निष्कामजनवल्लभः ॥४७॥ आशीविषेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽवतु मां प्रभुः । सर्वेपा-

ભગવાન્ દેહાભિમાનથકી મારું રક્ષણ કરો સ્વપ્રતાપક્ષિતાસુર –પોતાના દિવ્ય પ્રતાપથીજ સત્ધર્મરાજદ્વારા ક્ષય પમાડ્યા છે રાત્રિએ પોતાની ઉપર વારવાર પથ્થર ફેંકનારા મનુષ્યાકાર અસુરો જેમણે, એવા ભગવાન્ મોહથકી અને કુતર્કથકી મારી રક્ષા કરો ॥૪૪॥ निर्द्वन्द्व –દઢ આત્મનિષ્ઠ હોવાથી સુખદુઃખાદિ દ્વન્દ્વ ધર્મોથી નહિ પરાભવ પામતા, તે આ ભગવાન્ સુખદુઃખાદિસંજ્ઞિત દ્વન્દ્વથકી મારી રક્ષા કરો निष्परिग्रह –પૂર્ણકામ હોવાથી પદાર્થ માત્રના પરિગ્રહે રહિત એવા ઈશ્વર શ્રીહરિ તૃષ્ણામહાર્ણવથકી મારી રક્ષા કરો જે તૃષ્ણા છે તે અપાર અગાધ કોઈ પણ મોટો સમુદ્ર છે, જેનું નિસ્તરણ દુર્ઘટ છે ॥૪૫॥ सर्वग्रहभयङ्कर –સર્વ સૂર્યાદિગ્રહોને જે ભય કરનારા છે, જે પ્રશાસકના પ્રશાસનથી ભય પામેલા સૂર્યાદિકો પ્રતિદિન નિયમથી સ્વસ્વકાર્યને સાવધાન થઈ કરે છે 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः' એવી શ્રુતિ છે, આવા તે વિપ્રેન્દ્ર શ્રીહરિ સૂર્યાદિ વિષમગ્રહોથકી મારી રક્ષા કરો योगी–અઘટિત અર્થની ઘટના કરવારૂપ અતિશયિત નિત્ય મહાપ્રભાવ જેમનો છે, 'पश्य मे योगमैश्वरं' એમ ગીતામાં કહ્યું છે योगज्ञसन्नत –સનકાદિ મહાયોગિજનોએ પણ ઉત્તરીને સ્વાભિમાનત્યાગપૂર્વક નમસ્કાર કરેલા, એવા ભગવાન્ ક્રૂરદૃષ્ટિવાળા કેતુઓથકી મારી રક્ષા કરો ॥૪૬॥ ऊर्ध्वरेता –સ્વય ઊર્ધ્વરેતા, માટેજ તેવા નિષ્કામી નર જેમને બહુ વહાલા છે એવા ભગવાન્ આધિ–માનસદુઃખ અને વ્યાધિ–શારીરદુઃખથકી મારી રક્ષા કરો ॥૪૭॥ प्रभु –સર્વથા સમર્થ એવા ભગવાન્, જેમની દાઢોમાં વિષ

अमेध्यबुद्धिशोधनं स्वसिद्धशुद्धबोधनं कलिप्रवृत्तिरोधनं पदानमत्तपोधनम् । विभिन्नयाम्ययोधन पवित्रसत्पशोधनं भजामहे० ॥२॥

क्षराक्षरप्रशासिनं सदागमप्रकाशिनं मुनीन्द्रचित्तवासिनं विमुक्तचित्तमासिनम् । अनेकसूर्यभासिनं स्वभक्तसद्विलासिनं भजामहे० ॥३॥

इहावधारधारिणं स्वभक्तशान्तिकारिणं कुमार्गजालदारिणं भवाम्बुराशितारिणम् । सुवर्णिवेषधारिणं विचित्रसारहारिणं भजामहे० ॥४॥

मुनीन्द्रवृन्दरञ्जनं विवादिगर्वगञ्जनं सदोषहृद्विभञ्जनं तमोहरं निरञ्जनम् । अकाममक्तसञ्जनं कृतान्तमीतिमञ्जन भजामहे० ॥५॥

दयासुधार्द्रलोचनं विबद्धजीवमोचनं नवाम्बुदालिरोचनं हृतस्वकीयशोचनम् । सुचारशीलशालिनं समस्तभक्तपालिनं भजामहे० ॥६॥

अदोषभक्ततोषणं सधर्मभक्तिपोषणं प्रियप्रहीणरोषणं प्रपन्नपापमोषणम् । स्वकीयदोषशोषणं विशुद्धहार्दजोषण भजामहे० ॥७॥

सुधर्मवंशमण्डनं प्रचण्डदुष्टदण्डनं कुवासनाविखण्डन नताखिलार्तिकण्डनम् । असम्मतावखण्डनं सदम्भमानभण्डन भजामहे० ॥८॥

इति अचिन्त्यानन्दवर्णिविरचितं श्रीधर्मनन्दनवर्णनाष्टकं समाप्तम् ।

---

## औपच्छन्दसिकं वृत्तम् ।

निजधाम्नि परेऽक्षरेऽनिदिव्ये मणिसौवर्णवरासनस्थिताय ।
भगवन् ! हरये नमोऽस्तु तुभ्यं सहजानन्द ! पराक्षरात्परस्मै ॥१॥
परिजुष्टपदाम्बुजद्वयाय प्रणयेनागणिताक्षरद्वयमुक्तैः ।
रमणीयगुणार्णवाय भूम्ने सहजानन्द !० ॥२॥
सुकृतेन निषेविताय पित्रा परिवारेण सहानिशं च भक्त्या ।
अनुरागभरार्द्रचेतसैव सहजानन्द !० ॥३॥

निगमैरपि सिद्धिशक्तिजातै रुचिरप्राकृतमूर्तिभिश्च सर्वैः ।
वयुनादिभगैरुपासितो यः सहजानन्द !० ॥४॥
त्वमसीश्वर एक एव हेतुर्भुवनानां प्रभवादिषु स्वतन्त्रः ।
न समो भवतोऽस्ति कश्चिदन्यः सहजानन्द !० ॥५॥
निगमागमधर्मवर्त्मरक्षामिह कर्तुं त्वसतां च निग्रहाय ।
नरनाट्यवपुर्दयापयोधे सहजानन्द !० ॥६॥
त्वयि न प्रकृतेर्गुणा भवन्ति प्रचुरैश्वर्ययुतेऽपि मानुषत्वे ।
स्मरणीयपदं सदा जनानां सहजानन्द !० ॥७॥
प्रियकृच्च सुहृत्पिता च माता हितकारी गुरुरस्युदारमित्रम् ।
शरणं त्वमधीश एव नस्त्वं सहजानन्द !० ॥८॥

इति अचिन्त्यानन्दवर्णिविरचितं नमनाष्टकं समाप्तम् ।

---

## श्रीनारायणमुनिनीराजनस्तोत्रम् ।

जय देव ! २ जय मङ्गलमूर्ते ! २ नारायण !
पुरुषोत्तम ! २ कृतनिजसुरपूर्ते ॥ ध्रुवपदम् ॥

प्राकृततमसः पारे महसि प्रथमाने २ श्रीराधासहितस्त्वं
२ मद्यपुरेऽमाने । श्वेतद्वीप उदारेऽप्युरुरुचिरचियुक्ते
२ मूर्ते धामनि भूते २ निवससि सितयुक्ते जय० ॥१॥
वैकुण्ठेऽपि रमाया दयितेऽतिविशाले २ रचिते खेन च
विष्णु २ वसति रमकाले । चातुर्मास्य उदारे मृदुतरत-
नुरोपे २ क्षीराब्धावपि लक्ष्म्या २ सेवितपदपद्मे जय० ॥२॥
त्वं च हिरण्मयरूपो रविमण्डलवर्ती २ मानायज्ञपतिस्त्वं
२ यज्ञनश्रयवर्ती । नरनारायणरूपो बदरीवनधामा २
सुखयसि तपसा लोकान् २ भयभयहरनामा जय० ॥३॥

गोलोकाधिपतिस्त्वं कृष्णः कलिकर्ता २ राधासङ्गविहारी २ मुरलीरवकर्ता। वैकुण्ठे महति त्वं हरिरसि सुखदाता २ रमया चापि महत्या २ सहितोऽरिष्टपाता जय० ॥४॥ योगेश्वर! सकलात्मा श्रितजनभयहारी २ त्वमसि प्राणभृतां वै २ निःश्रेयसकारी। तव चरणाम्बुजमेकं शरणं नः सततं २ मोचय मायिकबन्धात् २ दूरय दुर्मतं जय० ॥५॥

इति श्रीसत्सङ्गिजीवनस्थं नीराजनस्तोत्रम्।

---

## कर्णाटकरागे एकतालिताले गीयते।

शुचिरुचिकाञ्चनसूत्रमयानि रुचिरवसनानि दधानम्। नीलनलिनमिव रविकररञ्जितमतिशयहर्षनिधानम्॥ सहजानन्द सुशीलं माधव माधव वपुरतिवरमभिदर्शय मां तव नीरदनीलम्॥ ध्रुव० ॥१॥

विविधमणीन्द्रसुवर्णविभूषणकिरणगणैरभिरामम्।
सजलसलिलधरपटलमिवेन्द्रशरासनयुतमतिवामम्॥ सह० ॥२॥
यस्य विलोक्य वदनमतिपावनमिन्दुरतुलमतिकान्तम्।
भ्रमति वियति सततं रभसादिव चित्रमुपेत्य नितान्तम्॥ सह० ॥३॥
पल्लवबिम्बवराधरनिपतितमन्दहसितरुचिजालम्।
तर्जितमौक्तिकयुतविद्रुमरुचिपरिरतपरमम्रालम्॥ सह० ॥४॥
नलिनपटलपरिलञ्जनलोचनगलितदयामृतधारम्।
चपलविलोकनलक्षितरञ्जनशकुलमखिलभयहारम्॥ सह० ॥५॥
दीपशिखाशुकचञ्चुवितर्जिततापशमनवरनासम्।
कुन्दकुसुमशरदिन्दुविनिन्दकहासमुदारविलासम्॥ सह० ॥६॥
रुचिरकेशरतिलकपिशुनवरचन्द्रकमञ्जुलभालम्।
कोटिमदनमदहरमतिभासुरकरपादनखविशालम्॥ सह० ॥७॥

ललितमृदुलशुभलक्षणलक्षितविपुलहृदयवनमालम् ।
उदरवलित्रयनाभिजलाशयशालि कलुषकलिकालम् ॥ सह० ॥८॥
कृष्णानन्दरचितमिदमतिशुभगीतमुदितहरिरूपम् ।
मङ्गलमधितनुतामिह पठतां सुखमपि हरिरनुरूपम् ॥ सह० ॥९॥

इति अचिन्त्यानन्दवर्णिविरचिता श्रीसहजानन्दस्वरूपवर्णनाष्टपदी ।

---

## श्रीहरेर्भुक्तिलीलात्मकस्तोत्रम् ।

वृषकुलकमलरवे! शनकैर्भगवंस्त्वं २ समय इह विहाय तु चपलत्वम् ।
यद्रुचिकरमन्न यथेष्टमधिरसमद्धि हरे! ॥ ध्रुवपदम् ॥
कनकमयदिनकरोज्ज्वलपात्रभृताद्यं २ सरससुखकरोत्तमबहुखाद्यम् ।
साज्यसुरभिसुन्दरकूरमधिरसमद्धि हरे! ॥१॥
असुहितकरसघृतं परमान्नमपूपं २ सदधिवटकमुत्तमरससूपम् ।
शाष्कुलिकमिदं च रसालमधिरसमद्धि हरे! ॥२॥
मीलितनवघृतसितं कदलमृदुपोळीं २ भवदभिमतफुल्लितसितपुरिम् ।
शाटकदयितोदनपिष्टमधिरसमद्धि हरे! ॥३॥
अदनरचिदचटनीं वटिकां घृतपाकं २ समजलधिजसंस्कृतबहुशाकम् ।
पिण्डकमुत मौक्तिकगोलमधिरसमद्धि हरे! ॥४॥
स्थिरकगुडकसुखदा. ससितं दधिमण्डं २ शशिनिभसममिश्रितघृत-
खण्डम् । मोदकमतिचारुचिरश्रमधिरसमद्धि हरे! ॥५॥
मरिचलवणजरणादियुतेऽद्धि रसाद्यं २ दधनि निहितमोदनमयशाधम् ।
मा कुरु कवलं ह्यपि दूरमधिरसमद्धि हरे! ॥६॥
करकमलनिकटग ससितं नवनीतं २ विशदपृथुलपर्पटमय शीतम् ।
स्वगु पिब सितोदनदुग्धमधिरसमद्धि हरे! ॥७॥

शुचि कुरु करकमलं वदनं सुखवासं २ तदनु सदयमाददस्व निजदासम् । शिक्षय हृदि मे कुरु वासमधिरसमद्य हरे ! ॥८॥

इति श्रखण्डानन्दवर्णिविरचितं श्रीहरिभोजनकालीयप्रार्थनास्तोत्रम् ।

## अष्टपदीयम् ।

धर्मधुरन्धर ! दैत्यभयङ्कर ! भक्तमनोहर ! भक्तपते ! ।
बोधसुधाकर ! भक्तिदिवाकर ! योगकलाधर ! योगिगते ! ।
जयजय मुनिवर ! सज्जनशङ्कर ! भक्तमहादर ! भक्तरते ! जय० ॥१॥
जीवदयाकर ! भक्ततमोहर ! भक्तसुखाकर ! मुक्तिपते ! ।
वाक्यसुधाधर ! धर्मसुपञ्जर ! कामकलाहर ! दिव्यगते ! जय० ॥२॥
सङ्करभञ्जन ! चारुविलोचन ! बन्धविमोचननामतते ! ।
नाशितबन्धन ! निर्मदनन्दन ! दुष्कृतरन्धन ! सुकृतरते ! जय० ॥३॥
शर्मदवन्दन ! नित्यनिरञ्जन ! सज्जनरञ्जन ! साधुपते ! ।
दम्भविभेदन ! मत्सरखेदन ! रोषविनाशन ! शान्तमते ! जय० ॥४॥
विश्वविभावन ! सज्जनपावन ! पापविदाहनपादनते ! ।
सत्पुरुषावन ! कापुरुषोत्सन ! कंसनिकन्दन ! सत्यकृते ! जय० ॥५॥
सत्पथपोषण ! कापथशोषण ! लोभविमोषण ! पापहृते ! ।
सज्जनभूषण ! दुर्जनदूषण ! भक्तविभूषण ! धर्मरते ! जय० ॥६॥
लोकविलक्षणबोधविचक्षण ! सज्जनरक्षण ! साधुवृते ! ।
पद्मदलेक्षण ! लक्षितलक्षण ! दिव्यविभूषण ! पुण्यरते ! जय० ॥७॥
कुरु तव किङ्करमङ्घ्रिरजोभरमानतसङ्करमात्मरतिम् ।
सेवनवरपरमिष्टमहादरमच्युत ! केशव ! नित्यमुनिम् ॥८॥

इति नित्यानन्दमुनिविरचिताष्टपदी सम्पूर्णा ।

## गुर्जरीरागे एकतालीताले गीयते ।

एहि दयालो ! हृदयशयालो ! दर्शय सुमधुरमूर्तिम् ।
प्रशमय तापं विदलय पापं जनय हृदयसुखपूर्तिम् ॥ ध्रुवपदम् ॥
सुखकरशीले जलधरनीले हसितमुखे त्वयि याते ।
ताम्यति चेतो वीक्षणहेतोः कृतिरियमतिविषमा ते एहि० ॥१॥
चरणसमीपे शुभमतिदीपे सुखयसि खलु जनजातम् ।
स्मर तव दासं दूरनिवासं कुरु गुरुविरहविघातं एहि० ॥२॥
जगदनुकूले मङ्गलमूले त्वयि चिरयति हरिदाने ।
नहि मम स्नाने न च जलपाने रुचिरणुरपि न निधाने एहि० ॥३॥
जनसुपकारी भवभयहारी त्वमसि विषयविषपाता ।
मा विपरीतो भव सुप्रीतो रमणचरणदशिदाता एहि० ॥४॥
वचनविगीतं चरित्रमधीतं मम बहुतरमपराधम् ।
मा कुरु भावे करुणाहावे शीलमव निजमगाधं एहि० ॥५॥
पद्यमपूर्णं त्यजसि हि तूर्णं का बत तव परिपाटी ।
त्वयि सुखपूरे निवसति दूरे भपतति कलिमलपाटी एहि० ॥६॥
बोधितमन्दं सहजानन्दं शासितशमनभटौघम् ।
प्रोज्झ्य भवन्तं भुवि विलसन्तं न गतिरितितवनावं एहि० ॥७॥
गतसुखलेशे कुमतिनिवेशे कुरु करुणां चरणसम्बम् ।
विरहविहीनं कुरु तव दीनं किमिति करोषि विलम्बं एहि० ॥८॥

इति दीनानाथभट्टविरचिता विरहाष्टपदी समाप्ता ।

---

## ठुमरीरागे गीयते ।

भजनीयं केशवरूपमवनीयमे । अजहरिहररतं दर्शय ते ॥ भज० ॥
नूतनजलधरमेचकदेहम् । दितिसुतादितिजनरनमनीयमे ॥ भज० ॥१॥

## ठुमरीरागे गीयते ।

मदनं दर्शय मन्दहसनम् । भक्तिप्रिय ते हरे जनरञ्जनम् ॥ वदनं० ॥ ध्रु०
कुङ्कुमलालं अधरप्रवालम् । मदनगर्वोच्चयखण्डनम् ॥ वदनं० ॥१॥
तनुसितदन्तं वरवरकान्तम् । मधुरहासश्रीमोहनम् ॥ वदनं० ॥२॥
शासितकालं भ्रुकुटिकरालम् । शशिरविव्योमविवासनम् ॥ वदनं० ॥३॥
सुन्दरनासं सौरभवासम् । नयनचारूत्तमभूषणम् ॥ वदनं० ॥४॥
मोदितमारं समुदितसारम् । निगमागमखगनीडनम् ॥ वदनं० ॥५॥
कुण्डलभासं केसरभासम् । वचनामृतैर्जननन्दनम् ॥ वदनं० ॥६॥
चञ्चलनेत्रं कारुण्यक्षेत्रम् । विकचिताब्जभातिमोषणम् ॥ वदनं० ॥७॥
पुण्डिृतभालं तारितबालम् । जनहितपीयूषवर्षणम् ॥ वदनं० ॥८॥

इति श्रीसहजानन्दस्वामिशिष्याखण्डानन्दवर्णिविरचिता श्रीहरिप्रार्थनाष्टपदी समाप्ता ।

---

## अष्टपदीयम् ।

तरुणं लोकय पातिकरुणं कृष्ण पथि हे सखीमं रञ्जनम् ॥ तरुणं० ॥१॥
भावयमानं कलरवगानं विधुमुखबालानन्दनं ॥ तरुण० ॥२॥
वपुषि नीले गजगतिलीले दधत तु केसरचन्दनं ॥ तरुणं० ॥३॥
चेतो हरन्तं सखि विहरन्त कुसुमहारमीशमण्डनम् ॥ तरुणं० ॥४॥
चञ्चलदृष्टिं कृतलोकसृष्टिं अजितमदनमदगञ्जनं ॥ तरुण० ॥५॥
सुमनोऽनुकूलं मङ्गलमूलं कुपथदेशिकमतखण्डनं ॥ तरुण० ॥६॥
धृतसितवसनं सुखमितहसनं विधिभवदेवकृतवन्दन तरुण ॥७॥
उपचितसेवं कविवासुदेवं तं पाति कलिकालकम्पनम् ॥ तरुणं ॥८॥

इति श्रीवासुदेवानन्दवर्णिविरचिताऽष्टपदी सम्पूर्णा ।

## ठुमरीरागे गीयते ।

हर हर गोपीनाथ! मम कष्टम् ॥ हर० ॥ ध्रुवपदम् ॥
सुरनरमुनिवर जलधरसुन्दर । मारमहामदमार मम० ॥१॥
राजीवलोचन पापविमोचन । दुर्गपुरीसुविहार मम० ॥२॥
हाटकभूषण हृतजनदूषण । दिव्यगुणालयसार मम० ॥३॥
वृषकुलनायक सुरसुखदायक । कुन्दकुसुमशुभहार मम० ॥४॥
मङ्गलकारण गतिजितवारण । प्रेमवतिसुकुमार मम० ॥५॥
मानसमोदन दितिसुतरोदन । भूमिनिवारितभार मम० ॥६॥
विश्वविभावन दुर्मतिपावन । कालदवानलहार मम० ॥७॥
सुरकुलरञ्जन नित्यनिरञ्जन । भानुसुतावितनार मम० ॥८॥
मन्त्रपुरासन जनहितशासन । निष्कामानन्दनिधान मम० ॥९॥
इति निष्कामानन्दवर्णिविरचिताऽष्टपदी समाप्ता ।

## पिलुरागेण गीयते ।

*मानस चिन्तय चारुचरित्रं प्रेमवतिवृषपुत्रं पवित्रं मानस० ॥ ध्रुव० ॥*
नूतनमुदिरदयितमञ्जुकाये । चन्द्रविशदवसनानि धरन्तं मानस० ॥१॥
केसरतिलकललितनिजभाले । कुङ्कुमचन्द्रकधरमभिरामं मानस० ॥२॥
विन्दुपरिष्कृतशुभश्रुतियुग्मे । रत्नसुशोभितकुण्डलधारं मानस० ॥३॥
अम्बकमधुपलसितलपनाब्जे । कुन्दमुकुलसमहासं दधानं मानस० ॥४॥
रेखाविराजितवरकम्बुकण्ठे । पुरुविधपुष्पकनकमणिहारं मानस० ॥५॥
विषधरविग्रहकल्पकरद्वये । पुष्परचितवलयाङ्गदधारं मानस० ॥६॥
हरिमदहरतनुमञ्जुलकट्यां । नङ्गखचितचामीकररसनाढ्यं मानस० ॥७॥
करिकरकदलीकरभसमसक्थिम् । सुपमसुवृत्तमुकुररूपजानुं मानस० ॥८॥
नूपुरनादितचरणमुदारम् । निष्कामानन्दनिखिलतापहारं मानस० ॥९॥
इति निष्कामानन्दवर्णिविरचिताऽष्टपदी समाप्ता ।

## ठुमरीरागे गीयते ।

भज मानस त्वं श्रीहरिं हरिकृष्णं पुराणम् ॥ भज० ॥ ध्रुवपदम् ॥
मायापरे निलये निवसन्तम् । मुनिजनमण्डलमण्डितं हरि० ॥१॥
नवघनमेचकमङ्गं दधानम् । कामरिपुमदमारकं हरि० ॥२॥
भास्वद्द्युतिवसनैर्विलसन्तम् । बहुविधभूषणभूषितं हरि० ॥३॥
भुवि शकुलाद्याकृतिं विदधानम् । स्वीयजनानन्ददायकं हरि० ॥४॥
प्रेमवतीवृषलालं विशोकम् । दुर्गपत्तनसंवासिनं हरि० ॥५॥
उन्मत्तगङ्गाजले विहरन्तम् । ज्ञानसुधाजनशङ्करं हरि० ॥६॥
ब्रह्मप्रियं ब्रह्मव्रतधरवेषम् । ब्रह्मव्रतधरनायकं हरि० ॥७॥
हंसरुचिरगमनं कञ्जनेत्रम् । धर्मवंशावनकारकं हरि० ॥८॥
निष्कामवर्णिरचितगीतगीतम् । निष्कामनरव्रजशर्मदं हरि० ॥९॥

इति निष्कामानन्दवर्णिविरचिताऽष्टपदी समाप्ता ।

---

## अष्टपदीयम् ।

परवरद हरे केशव कान्त रमानाथ सङ्गतभयहारम् ।
भवहर धार्य भजामि त्वां दिव्यगुणाकारम् ॥ ध्रुवपदम् ॥
वरनवघनसमरूपामरभूपानत पीताम्बरधारम् । शिवरिपुमदहरमोदितसाधो स्थलपङ्कजहारम् ॥ स्थल० २ ॥ रमानाथ ॥१॥
नरवरसुरवरपूजितपादसरोरुह वरपङ्कजनाभम् । नरसख नरकनिवारण माधव रजनीशतुल्याभम् ॥ रज० २ ॥ रमानाथ ॥२॥
अघहर सुखकर दीनदयावरणालय मुनिमण्डलध्येयम् । मुरहर मधुहर कंसविमर्दन श्रुतिसन्ततगेयम् ॥ श्रुति० २ ॥ रमानाथ ॥३॥
भवभयलयकर विश्वंभर दामोदर धर्मात्मजमीशम् । पदयुगयव-

वरतरसुरचिरमङ्गालय नारायण दोषवारणम्। दितिसुतपरमवि
मोहन विष्णो भवनिधितारणम् ॥ भव० २ ॥ रमानाथ ॥५॥
अभयद सदय सदानन्दाकर पालक सन्ततवनमालम्। विकचित-
निजजनमानससारस धर्मान्वयपालम्॥ धर्मा० २॥ रमानाथ० ॥६॥
जलधरसुमधुरवाणी रणशान्तिकर कलिमलसंहारम्। शशिनिभव-
दनकराम्बुजनत्तक धृतशेखरसारम् ॥ धृत० २ ॥ रमानाथ ॥७॥
बहुतरदिनकरचन्द्रानलकान्तिहर पुरयोषितमन्दम्। सुललितगमन-
विलज्जितवारण निष्कामानन्दम् ॥ निष्का० २ ॥ रमानाथ ॥८॥

इति निष्कामानन्दवर्णिविरचिताष्टपदी समाप्ता।

---

## अष्टपदीयम्।

वरवर करुणासागर कृष्ण सतानाथ संपत्तिकरणम्।
जयजय धार्मिक नमामीह सङ्कष्टहरणम् ॥ ध्रुवपदम्॥

वरवर नरसख चन्द्रानन देवाधिप दैत्यनाशनम्। वृषसुत
परमदयाकर साधो खगपतिवाहनम्॥ खग० २॥ सतानाथ० ॥१॥
वरवर जलधरकायाभयरूपाकर लोकपावनम्। जितरुप तरणि-
करोज्ज्वलवासो लघुतरधावनम् ॥ लघु० २ ॥ सतानाथ० ॥२॥
वरवर दीनदयाकर तप प्रियानित कुसुमोत्तमहारम्। किसलय-
मृदुलमहाबलहस्त महसि महाकारम् ॥ मह० २॥ सतानाथ० ॥३॥
वरवर सरसिजलोचन पापविमोचन जनतासुखकारम्। विधिविधि-
सहितपदाम्बुजदेव भवसागरतारम् ॥ भव० २ ॥ सतानाथ ॥४॥
वरवर सुचरितपुण्यावनभूमिधृतसुरचिरनरदेहम्।अनलस वरद
वमोहर तेज स्थिरुचिमयगेहम्॥ स्थित० २॥ सतानाथ ॥५॥

## ठुमरीरागे गीयते ।

भज मानस त्वं श्रीहरिं हरिकृष्णं पुराणम् ॥ भज० ॥ ध्रुवपदम् ॥
मायापरे निलये निवसन्तम् । मुनिजनमण्डलमण्डितं हरि० ॥१॥
नवघनमेचकमङ्गं दधानम् । वामरिपुमदमारकं हरि० ॥२॥
भास्वद्द्युतिवसनैर्विलसन्तम् । बहुविधभूषणभूषितं हरि० ॥३॥
भुवि प्राकृताकृतिं विदधानम् । स्वीयजनानन्ददायकं हरि० ॥४॥
प्रेमवतीवृषलालं विशोकम् । दुर्गपत्तनसंवासिनं हरि० ॥५॥
उन्मत्तगङ्गाजले विहरन्तम् । ज्ञानसुधाजनशङ्करं हरि० ॥६॥
ब्रह्मप्रियं ब्रह्मव्रतधरवेषम् । ब्रह्मव्रतधरनायकं हरि० ॥७॥
हंसरुचिरगमनं कञ्जनेत्रम् । धर्मवंशावनकारकं हरि० ॥८॥
निष्कामवर्णिरचितगीतगीतम् । निष्कामनरमजशर्मदं हरि० ॥९॥

इति निष्कामानन्दवर्णिविरचिताऽष्टपदी समाप्ता ।

---

## अष्टपदीयम् ।

परवरद हरे केशव कान्त रमानाथ सन्ततभयहारम् ।
भवहर वार्य भजामि त्वां दिव्यगुणाकारम् ॥ ध्रुवपदम् ॥
वरनवघनसमरूपामरभूपानत पीताम्बरधारम् । शिवरिपुम-
दहरमोदितसाधो स्खलपङ्कजहारम् ॥ स्खल० २ ॥ रमानाथ ॥१॥
नरवरसुरवरपूजितपादसरोरुह वरपङ्कजनाभम् । नरसख नरक-
निवारण माधव रजनीशतुल्याभम् ॥ रज० २ ॥ रमानाथ ॥२॥
अघहर सुखकर दीनदयावरणालय मुनिमण्डलध्येयम् । सुरहर
मधुहर कंसविमर्दन श्रुतिसन्ततगेयम् ॥ श्रुति० २ ॥ रमानाथ ॥३॥
भवभयलयकर विश्वंभर दामोदर धर्मात्मजमीशम् । पदयुगयव-
मुखचिह्नविराजित ब्रह्मभवादीशम् ॥ ब्रह्म० २ ॥ रमानाथ ॥४॥

वरतरसुरचिरब्रह्मालय नारायण दोपवारणम्। दितिसुतपरमवि-
मोहन विष्णो भवनिधितारणम् ॥ भव० २ ॥ रमानाथ ॥५॥
अभयद सदय सदानन्दाकर पालक सन्धृतवनमालम्। विकचित-
निजजनमानससारस धर्मान्वयपालम् ॥ धर्मा० २ ॥ रमानाथ० ॥६॥
जलधरसुमधुरवाणी रणशान्तिकर कलिमलसंहारम्। शशिनिभव-
दनकराम्बुजनक्तक धृतशेखरसारम् ॥ धृत० २ ॥ रमानाथ ॥७॥
बहुतरदिनकरचन्द्रानलकान्तिहर पुरुबोधितमन्दम्। सुललितगमन-
विलजितवारण निष्कामानन्दम् ॥ निष्का० २ ॥ रमानाथ ॥८॥

इति निष्कामानन्दवर्णिविरचिताष्टपदी समाप्ता ।

---

## अष्टपदीयम्।

वरवर करुणासागर कृष्ण सतांनाथ संपत्तिकरणम् ।
जयजय धार्मिक नमामीह सङ्कष्टहरणम् ॥ ध्रुवपदम् ॥

वरवर नरसख चन्द्रानन देवाधिप दैत्यनाशनम्। वृषसुत
परमदयाकर साधो खगपतिवाहनम् ॥ खग० २॥ सतांनाथ० ॥१॥
वरवर जलधरकायाभयरूपाकर लोकपावनम्। जितरप तरणि-
करोज्वलवासो लघुतरधावनम् ॥ लघु० २ ॥ सतांनाथ० ॥२॥
वरवर दीनदयाकर तप.प्रियाजित कुसुमोत्तमहारम्। किसलय-
मृदुलमहाबलहस्तं महसि महाकारम् ॥ मह० २॥ सतांनाथ० ॥३॥
वरवर सरसिजलोचन पापविमोचन जनतासुखकारम्। विधिविधि-
महितपदाम्बुजदेवं भवसागरतारम् ॥ भव० २ ॥ सतांनाथ ॥४॥
वरवर सुचरितपुण्यावनभूमिधृतसुरचिरनरदेहम्। अनलस वरद
तमोहर तेज स्थितरुचिमयगेहम्॥ स्थित० २॥ सतांनाथ ॥५॥

## श्रीनीलकण्ठवर्णिकृत-रामस्तुतिः ।

योऽहल्यां नीजकर्मणैव महतीं प्राप्तां गतिं दुर्विधां
दीनां गौतमयोषितं निपतितां निःसाधनां कानने ।
सद्योऽमोचयदात्मपादकमलस्पर्शेन तं पावनं
रामं जीवहितं भजेऽद्भुतिकरणं निर्हेतुकोपप्रियम् ॥१॥
यो वा तामसहिंस्रजातिजनितं क्रूरं निषादाधिपं
घोरारण्यविहारिणं पशुसमं नृणां च हीनं धिया ।
प्रेम्णा सम्परिषस्वजे करुणयाऽनादृत्य जात्यादि तं रामं० ॥२॥
सीताद्रोहकरं सुरेन्द्रतनयं काकाकृतिं बिभ्रतं
वध्यं चापि शरेण सर्वभुवनेष्वभ्रामयद्यः प्रभुः ।
भ्रान्तं शोकहतं च तं स्वशरणं प्राप्तं मुमोचैव तं रामं० ॥३॥
जात्या हीनतमां स्त्रियं च शबरीं कोलीरवन्तीमपि
ज्ञात्वा स्वेक्षणमिच्छतीं करुणया तस्यै निजं दर्शनम् ।
योऽदादाऽऽश च तत्फलानि मुदितस्तं जानकीवल्लभं रामं० ॥४॥
तिर्यग्योनिसमुद्भवस्य पललाहारस्य यः पक्षिणो
गृध्रस्यापि जटायुषो व्रततपोदानैर्विहीनस्य च ।
चक्रेऽन्त्यां सकलां क्रियां सुत इव प्रीत्या स्वतातस्य तं रामं० ॥५॥
सुग्रीवं निजबन्धुभीतमगृहं शाखामृगाणां पतिं
दृष्ट्वा स्वं शरणं गतं कथमपि प्रीत्या स्वसख्येऽकरोत् ।
हत्वा वालिनमाशु चैनमदधात्स्वीये पदे यश्च तं रामं० ॥६॥
शत्रोरप्यनुजं निशाचरमपि प्राप्तं स्वपादान्तिकं
दूराद्वीक्ष्य विभीषणं प्रमुदितस्तत्सम्मुखं चैत्य यः ।
हस्ताभ्यां परिरब्धवानिव निजं सौमित्रिमेवाशु तं रामं० ॥७॥
यत्स्मृत्यापि शुभं भवेद्धि नृणां तान्कीशऋक्षानपि
प्रीत्या वैदिकमग्रवच्छुचितरान् योऽत्राकरोत्स्वाश्रयात् ।

अन्यांश्चापि बहूनतारयदितो जीवान् भवाब्धेर्हि तं
रामं जीवहितं भजेऽतिकरुणं निर्हेतुकोपक्रियम् ॥८॥
इति श्रीशतानन्दमुनिविरचितं सत्सङ्गिजीवनस्थं स्तोत्रं समाप्तम् ।

---

## लक्ष्मीस्तुतिः ।

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्याऽऽसनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ! ब्रूमः कथं त्वां वयम् ॥१॥
यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
र्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वत ।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो
लोकैकेश्वरि ! लोकनाथदयिते ! दान्ते दयां ते विदन् ॥२॥
ईषत्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं सम्प्रत्यनन्तोदयम् ।
श्रेयो नह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित् ॥३॥
शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरे-
र्मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि ता-
न्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥४॥

---

## श्रीनीलकण्ठवर्णिकृता-श्रीशङ्करस्तुतिः ।

सदाशिवं शाश्वतमीशितारं मसान्वमायापतिमण्डलेशम् ।
महादिदेवार्चितपादपद्मं श्रीशङ्करं त्वामहमानतोऽस्मि ॥१॥

सर्वेश्वरं सर्वगुणाधिवासं देवं महादेवमुदारकीर्तिम् ।
विद्यातपोयोगकलानिधानं श्रीशङ्करं० ॥२॥
सकालमायायमसीतिमङ्कं जगज्जनित्राणविनाशहेतुम् ।
प्रचेतसां देशिकमाप्तकामं श्रीशङ्करं० ॥३॥
महाविपन्नातसमस्तलोकं मृत्युञ्जयं मर्त्यजनाशुतोषम् ।
भस्मावशेषीकृतकामदेहं श्रीशङ्करं० ॥४॥
अशेषविद्यागममग्र्यमूलं वैराग्यवेगोज्झितसर्वभोगम् ।
मुमुक्षुभिर्मुक्तजनैश्च सेव्यं श्रीशङ्करं० ॥५॥
गङ्गाधरं चान्धकदैत्यनाशं कैलासनाथं सुखिवात्मदासम् ।
पापोच्चयोन्मूलननाममन्त्रं श्रीशङ्करं० ॥६॥
श्रीविश्वनाथं कृतकाशिवासं प्रमीतकर्णोदिततारकं च ।
भवोद्धृतानेकमहाधिजीवं श्रीशङ्करं० ॥७॥
देवादिसङ्कष्टहरं हराख्यं श्रीपार्वतीप्राणपतिं पुरारिम् ।
वृषध्वजं मङ्गलमूर्तिमीशं श्रीशङ्करं त्वामहमानतोऽस्मि ॥८॥

इति श्रीशतानन्दमुनिकृतं सत्सङ्गिजीवनस्थं स्तोत्रं समाप्तम् ।

---

## श्रीनीलकण्ठवर्णिकृता-पार्वतीस्तुतिः ।

मातः! शिवे मङ्गलवृन्ददात्रीं सर्वेश्वरीं चाखिललोकधात्रीम् ।
महासतीं शङ्करशक्तिमाद्यामुमामहं त्वां प्रणमामि देवीम् ॥१॥
सुरेन्द्रमुख्यामरकष्टदातुर्विनाशयित्रीमसुरव्रजस्य ।
सदैव सर्वामरसौख्यदात्रीमुमामहं त्वां प्रणमामि देवीम् ॥२॥
निशुम्भशुम्भासुरदर्पहर्त्रीं निजाश्रितापञ्चियापहर्त्रीम् ।
श्रीविष्णुकार्यायतयोगमायामुमामहं त्वां प्रणमामि देवीम् ॥३॥

सुरारिनाशार्थमनेकशक्तीरुत्पादयन्तीममरेन्द्रपक्षाम् ।
महामृधाविष्कृतभूरिदंष्ट्रामुमामहं त्वा प्रणमामि देवीम् ॥४॥
सुरापलस्यार्चकसर्ववर्णशीर्षच्छिदाक्रोधकरालवक्त्राम् ।
अभीष्टदात्रीं भजकन्यकानामुमामहं त्वां प्रणमामि देवीम् ॥५॥
दाक्षायणीं रूपधरा युगादौ सतीं ततः श्रीगिरिराजपुत्रीम् ।
साध्वीव्रतत्राणपरामनादिमुमामहं त्वां प्रणमामि देवीम् ॥६॥
नरामरैर्दुष्करमुग्रमादौ तपश्चरन्तीं गिरिशप्रसत्त्यै ।
न पत्रमप्याद इति ह्यपर्णामुमामहं त्वां प्रणमामि देवीम् ॥७॥
प्रसूं गणेशस्य सदैव सेवापरायणामम्ब ! महेश्वरस्य ।
अमङ्गलघ्नीं निजसेवकानामुमामहं त्वां प्रणमामि देवीम् ॥८॥
इति श्रीशतानन्दमुनिकृतं सरसत्रिजीवनस्थं स्तोत्रं समाप्तम् ।

---

## गणपतिस्तोत्रम् ।

विघ्नेश ! विघ्नचयखण्डननामधेय ! श्रीशङ्करात्मज ! सुराधिपवन्द्यपाद ! ।
दुर्गामहाव्रतफलाखिलमङ्गलात्मन् ! विघ्नं ममापहर सिद्धिविनायक ! त्वम् ॥
सत्पद्मरागमणिवर्णशरीरकान्तिः श्रीसिद्धिबुद्धिपरिचर्चितकुङ्कुमश्रीः ।
दक्षस्तने वलयितातिमनोज्ञशुण्डो विघ्नं ममापहर सिद्धिविनायक ! त्वम् ॥
पाशाङ्कुशाब्जपरशूंश्च दधच्चतुर्भिर्दोर्भिश्च शोणकुसुमस्त्रगुमाङ्गजातः ।
सिन्दूरशोभितललाटविधुप्रकाशो विघ्नं ममापहर सिद्धिविनायक ! त्वम् ॥
कार्येषु विघ्नचयभीतविरञ्चिमुख्यैः सम्पूजितः सुरवरैरपि मोदकाद्यैः ।
सर्वेषु च प्रथममेव सुरेषु पूज्यो विघ्नं ममापहर सिद्धिविनायक ! त्वम् ॥४॥
शीघ्राञ्चनस्खलनतुङ्गरवोर्ध्वकण्ठस्थूलेन्दुरुद्रगणहासितदेवसङ्घः ।
शूर्पश्रुतिश्च पृथुवर्तुलतुङ्गतुन्दो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥५॥

यज्ञोपवीतपदलम्भितनागराजो मासादिपुण्यददृशीकृतऋक्षराज ।
भक्ताभयप्रद ! दयालय ! विघ्नराजो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥
सद्रत्नसारततिराजितसत्किरीट कौसुम्भचारुवसनद्वय ऊर्जितश्री ।
सर्वत्रमङ्गलकरस्मरणप्रतापो विघ्नं ममापहर सिद्धिविनायक ! त्वम् ॥७॥
देवान्तकाद्यसुरभीतसुरार्तिहर्ता विज्ञानबोधनवरेण तमोपहर्ता ।
आनन्दितत्रिभुवनेश ! कुमारबन्धो ! विघ्नं ममापहर सिद्धिविनायक ! त्वम्
इति श्रीशतानन्दमुनिविरचित सत्यज्ञिजीवनस्थ श्रीगणपतिस्तोत्रम् ।

## हनुमत्स्तोत्रम्[1] ।

नमस्त आञ्जनेयाय वायुपुत्राय धीमते ।
रामदूताय महते सुग्रीवसचिवाय च ॥१॥
नमोऽस्तु ते महावीर ! महाबलपराक्रम ! ।
वैरिभीषणरूपाय रावणत्रासदायिने ॥२॥
नमो हरावताराय शिलावृक्षायुधाय च ।
रक्ष सैन्यविमर्दाय नमस्तुभ्य यशस्विने ॥३॥
नमो हनुमते तुभ्य लङ्कानगरदाहिने ।
दशग्रीवसुतघ्नाय सीताशोकविनाशिने ॥४॥
नमोऽस्तु ते महायोगिन् ! सदा शुद्धान्तरात्मने ।
सीतारामातिहृद्याय नमस्ते चिरजीविने ॥५॥
नम कपीन्द्र ! ते नित्य सर्वरोगविनाशिने ।
भूतप्रेतपिशाचादिभयविद्रावणाभिध ! ॥६॥
नमस्तुभ्य रामभद्र ! पुरुश्रेष्ठाय भूयसे ।
नमोऽतिस्थूलरूपाय सूक्ष्मरूपधराय च ॥७॥

---

१ આ સ્તોત્ર સત્સંગિજીવનના પ્રથમ પ્રકરણમાં છે

नमोऽखिलभयघ्नाय निर्भयाय महात्मने ।
बालार्कद्युतिदेहाय मुष्टिप्रहरणाय च ॥८॥
नमो लङ्केश्वरोद्यानभङ्गवित्रासितासुप ! ।
रामनामानुरक्ताय लक्ष्मणप्राणदाय ते ॥९॥
नमस्ते विश्ववन्द्याय विजयाय वरीयसे ।
भक्तसङ्कटसंहर्त्रे धर्मनिष्ठाय जिष्णवे ॥१०॥
नमो नैष्ठिकवर्याय विजनारण्यवासिने ।
भक्ताभीष्टप्रदात्रे च पाण्डवप्रियकारिणे ॥११॥
नमो धर्मारिनाशाय विमलाय च भास्वते ।
नित्यं रामायणकथाश्रवणोत्सुकचेतसे ॥१२॥
नमो धार्मिकसेव्याय ब्रह्मण्याय सुरार्चित ! ।
तुभ्यं बृहद्ब्रह्मप्रेष्ठ ! सर्वपापापहारिणे ॥ १३॥
नमो दारिद्र्यदुःखघ्न ! मारुते ! बन्धखण्डन ! ।
सुखदाय शरण्याय नमस्ते कपिवृत्तये ॥१४॥
नमो वरद ! ते नित्यं रामध्यानाद्यनाकुल ! ।
सुखाराध्य ! दुराराध्य ! नमस्ते दिव्यरूपिणे ॥१५॥
नमोऽर्कपुष्पहाराय तुभ्यं मामभयं कुरु ।
दर्शनं देहि साक्षात्ते नमस्ते सर्वदर्शिने ॥१६॥

आ स्तोत्रथी उद्धृत षोडशाक्षर मन्त्र–

**नमो हनुमते भयभञ्जनाय सुखं कुरु, फट् स्वाहा ।**

જ્યારે કોઈપણ આધ્યાત્મ્યાદિ પીડા આવી પડે ત્યારે શ્રીહનુમાનજીનું પ્રથમ યથાવિધિ પૂજન કરી પછી ધ્યાન કરી પછી એકાગ્ર મનથી અર્થાનુસંધાનપૂર્વક ઉપરના સ્તોત્રનો પાઠ કરવો પછી સ્તોત્રમાંથી ઉદ્ધૃત ષોડષાક્ષર મંત્રનો દશ હજારવાર જપ કરવો અને પછી નીચે લખેલા

સ્તોત્રનો એક પગે ઉભા રહીને પાઠ કરવો, એ પ્રમાણે એક માસ કરવાથી ગમે તે કષ્ટ હોય તો નિવૃત્ત થાયછે અને ઇચ્છિત ફળની પ્રાપ્તિ થાયછે.

---

नीतिप्रवीन सबे निगमागम, शास्त्रमें बुद्धि रुरंके अपारा,
श्रीरघुनाथके मंत्री अनुपहो, ताहिते रामकुं प्रानसें प्यारा ।
प्रौढ शरीर सिंदुरसें सोहत, नैष्टिकके मध्य इंद्र उदारा;
श्रीरघुवीरके दूत महाबल, कष्ट हरो हनुमान हमारा ॥१॥
जानकी कारण श्रीरघुनाथकें, अंतरमें भयो कष्ट अनंता,
टारन ताही सहायक एक हने, मनुजाद महा बलवंता ।
जारि निशाचरनाथकी लंक, महामुनि सिद्ध प्रशंसत संता;
श्रीरघुवीरके दूत महाबल, संकट मोर हरो हनुमंता ॥२॥
रावनके सुत शक्ति चलाइ सो, आइ लगी अतिशे दु:खकारी;
कंठमें प्रान रामानुजके हित, लाये संजीवनी ओषधि भारी ।
लाये उठाइ द्रोणाचल वेगसें, रामके पक्षकी पीरसो टारी,
श्रीरघुवीरके दूत महाबल पीड हरो हनुमान हमारी ॥३॥
श्रीरघुनाथके आगमकी सो, वधाइलें भर्तकु वेग सुनाइ;
रामवियोग महादु:खसागर, डुबगत भर्तसें मोज हुं पाइ ।
जानकीनाथके अंघ्रीसरोजमें, भृंग ज्युं जास मति लपटाइ;
श्रीरघुनाथके दूत महाबल, संकटमें रहो मोर सहाइ ॥४॥
वायुस्वरूप ज्यो केसरी वानर, माननी तासको अंजनी नामा,
तासा महातपरूप भयो सुत, वायुकुमार अति अभिरामा ।
वेग खगेश समान वपु दृढ, वज्रके अंग अति बलधामा;
श्रीरघुवीरके दूत हरो सब, संकट मोय करो निष्कामा ॥५॥
बहुत प्रकारकी डाकिनी शाकिनी भैरव भूत अतिविकराळा,

कुल्या रु वीर पिशाच निशाचर, जाहिकु देखी डरे ततकाळा।
ज्याहीको मंत्र जपे सुत वित्तद, टारत ताप रु रोग विशाळा;
श्रीरघुवीरके दूत सदा मम, कष्ट हरो हनुमंत कृपाळा ॥६॥
ज्याहिको नाम सुनीके ततक्षन, भागत है ब्रह्मराक्षस घोरा;
ज्याके प्रतापसें प्रेत पिशाच रु, भागत भूत कबंध कठोरा,
ज्याके प्रताप डरे सब डाकिनी, जोगनी जादु भगे चहुं दूरा;
श्रीरघुवीरके दूत महाबळ, हे हनुमंत हरो दुःख मोरा ॥७॥
आपके भक्त अनन्यहे ताहीके, वांछित कामके पूरन हारा;
दुर्बल दीन रिपुभयव्याकुळ, ताहीके हो तुम इष्ट उदारा।
वांछित मोर सो देहु दयानिधि, वंदत हुं तोय बारही बारा;
श्रीरघुवीरके दूत महाबळ, कष्ट हरो हनुमंत हमारा ॥८॥
हाक सुने जबही तुमरी सब, राक्षसकी त्रिय गर्भकुं त्यागे;
जंत्र रु मंत्रके जान जादुगर, नाम तुमार सुनी डरी भागे।
ताहिते संकट नाश करो कहे, मुक्तदास प्रभुसो अनुरागें;
श्रीरघुवीरके दूत महाबल हे हनुमंत एहि वर मागें ॥९॥
यह अष्टक जो पढे तास सब संकट नासें
रामदूत हनुमान सदा दृग आगे भासें
विघन होत सब नाश मगन होय हरि गुन गावें
पाप पुंज सब टरत बोहोरी भयमें नही आवे
धन धान्य पुत्र संपति बधे कृष्णचरण रति पावहीं
मुनि मुक्त कहे सो भक्तवे संकट निकट न आवहीं ॥१०॥

इति श्रीसहजानन्दस्वामिशिष्याग्रगण्य-मुक्तानन्दमुनिप्रणीतं मारुतिस्तोत्रं समाप्तम्।

## हनुमत्स्तोत्रम् ।

[1]नीतिप्रवीण ! निगमागमशास्त्रबुद्धे ! राजाधिराजरघुनायकमन्त्रिवर्य ! ।
सिन्दूरचर्चितकलेवर ! नैष्ठिकेन्द्र ! श्रीरामदूत ! हनुमन् ! हर सङ्कटं मे ॥१
सीतानिमित्तजरधूत्तमभूरिकष्टप्रोत्सारणैककसहाय ! हतास्तपौघ ! ।
निर्दग्धयातुपतिहाटकराजधाने ! श्रीरामदूत० ॥२॥
दुर्वार्यरावणविसर्जितशक्तिघातकण्ठासुलक्ष्मसुखाहृतजीववल्ले ! ।
द्रोणाचलानयननन्दितरामपक्ष ! श्रीरामदूत० ॥३॥
रामागमोक्तितरितारितबन्धवयोगदुःखाब्धिमग्नभरतार्पितपारिबर्ह ! ।
रामाङ्घ्रिपद्ममधुपीभवदन्तरात्मन् ! श्रीरामदूत० ॥४॥
दान्वात्मकेसरिमहाकपिराट्तदीयभार्याञ्जनीपुरुतपःफलपुत्रभाव ! ।
तार्क्ष्योपमोचितवपुर्बलतीव्रवेग ! श्रीरामदूत० ॥५॥
नानाभिचारिकविसृष्टसवीरकृत्याविद्रावणारुणसमीक्षणदुःप्रधर्ष्य ! ।
रोगघ्नसत्सुतदवित्तदमन्त्रजाप ! श्रीरामदूत० ॥६॥
यन्नामधेयपदकश्रुतिमात्रतोऽपि ये ब्रह्मराक्षसपिशाचगणाश्च भूताः ।
ते मारिकाश्च सभयं ह्यपयान्ति स त्वं श्रीरामदूत० ॥७॥
त्वं भक्तमानससमीप्सितपूर्तिशक्तो दीनस्य दुर्मदसपत्नभयार्तिभाजः ।
इष्टं ममापि परिपूरय पूर्णकाम ! श्रीरामदूत० ॥८॥
इति श्रीशतानन्दमुनिविरचितं श्रीहनुमत्स्तोत्रं समाप्तम् ।

---

## उन्मत्तगंगास्तोत्रम् ।

### स्रग्धरावृत्तम् ।

या नित्यं भक्तभर्तुर्धृतनरवपुषो वासुदेवस्य साक्षात्
साकं मुक्तैर्मुनीन्द्रैः प्रमुदितवदनैः क्रीडया स्नानकाले ।

---

१ આ સ્તોત્ર સત્સંગિજીવનના પ્રથમપ્રકરણમાં છે.

कुत्या रु वीर पिशाच निशाचर, जाहिकु देखी डरे ततकाळा ।
ज्याहीको मंत्र जपे सुत विचद, टारत ताप रु रोग विशाळा,
श्रीरघुवीरके दूत सदा मम, कष्ट हरो हनुमत कृपाळा ॥६॥
ज्याहिको नाम सुनीके ततक्षन, भागत हे महाराक्षस घोरा,
ज्याके प्रतापसें प्रेत पिशाच रु, भागत भूत कबध कठोरा,
ज्याके प्रताप डरे सब डाकिनी, जोगनी जादु भगे चहु दूरा,
श्रीरघुवीरके दूत महाबळ, हे हनुमत हरो दु ख मोरा ॥७॥
आपके भक्त अनन्यहे ताहीके, वांछित कामके पूरन हारा,
दुर्बल दीन रिपुभयव्याकुळ, ताहीके हो तुम इष्ट उदारा ।
वांछित मोर सो देहु दयानिधि, बदत हु तोय बारही बारा,
श्रीरघुवीरके दूत महाबळ, कष्ट हरो हनुमत हमारा ॥८॥
हाक सुने जबही तुमरी तब, राक्षसकी त्रिय गर्भकु त्यागे,
जंत्र रु मंत्रके जान जादुगर, नाम तुमार सुनी डरी भागे ।
ताहिते सकट नाश करो कहे, मुक्तदास प्रभुसो अनुरागें,
श्रीरघुवीरके दूत महाबल हे हनुमत एहि वर मागें ॥९॥

यह अष्टक जो पढे तास सब सकट नासें
रामदूत हनुमान सदा द्रग आगे भासें
विघन होत सब नाश मगन होय हरि गुन गावें
पाप पुन सब टरत बोहोरी भवमें नही आवे
धन धान्य पुत्र सपति बधे कृष्णचरण रति पावहीं
मुनि मुक्त कहे सो भक्तके सकट निकट न आवहीं ॥१०॥

इति श्रीसहजानन्दस्वामिशिष्याग्रगण्य-मुक्तानन्दमुनिप्रणीत
मारुतिस्तोत्र समाप्तम् ।

## हनुमत्स्तोत्रम् ।

[1]नीतिप्रवीण ! निगमागमशास्त्रबुद्धे ! राजाधिराजरघुनायकमन्त्रिवर्य ! ।
सिन्दूरचर्चितकलेवर ! नैष्ठिकेन्द्र ! श्रीरामदूत ! हनुमन् ! हर सङ्कटं मे ॥१
सीतानिमित्तजरघूत्तमभूरिकष्टप्रोत्सारणैककसहाय ! हृतास्रपौघ ! ।
निर्दग्धयातुपतिहाटकराजधाने ! श्रीरामदूत० ॥२॥
दुर्वार्यरावणविसर्जितशक्तिघातकण्ठासुलक्ष्मसुखाहृतजीववल्ले ! ।
द्रोणाचलानयननन्दितरामपक्ष ! श्रीरामदूत० ॥३॥
रामागमोक्तितरितारितबन्धवयोगदुःखाब्धिमग्नभरतार्पितपारिबर्ह ! ।
रामाङ्घ्रिपद्ममधुपीभवदन्तरात्मन् ! श्रीरामदूत० ॥४॥
दान्तात्मकेसरिमहाकपिराट्तदीयभार्याञ्जनीयुरुतपःफलपुत्रभाव ! ।
तार्क्ष्योपमोचितवपुर्बलतीव्रवेग ! श्रीरामदूत० ॥५॥
नानाभिचारिकविसृष्टसयीरकृत्याविद्रावणारुणसमीक्षणदुःप्रधर्ष्य ! ।
रोगग्रसत्सुतदवित्तदमन्त्रजाप ! श्रीरामदूत० ॥६॥
यन्नामधेयपदकश्रुतिमात्रतोऽपि ये ब्रह्मराक्षसपिशाचगणाश्च भूताः ।
ते मारिकाश्च सभयं ह्यपयान्ति स त्वं श्रीरामदूत० ॥७॥
त्वं भक्तमानससमीप्सितपूर्तिशक्तो दीनस्य दुर्मदसपत्नभयार्तिभाजः ।
इष्टं ममापि परिपूरय पूर्णकाम ! श्रीरामदूत० ॥८॥

इति श्रीशतानन्दमुनिविरचितं श्रीहनुमत्स्तोत्रं समाप्तम् ।

## उन्मत्तगंगास्तोत्रम् ।

### स्रग्धरावृत्तम् ।

या नित्यं भक्तभर्तुर्धृतनरवपुषो वासुदेवस्य साक्षात्
साकं मुक्तैर्मुनीन्द्रैः प्रमुदितवदनैः क्रीडया स्नानकाले ।

---

१ આ સ્તોત્ર સત્સંગિજીવનના પ્રથમપ્રકરણમાં છે.

स्वर्धुन्या मानमुच्चैर्हरिचरणसकृत्स्पर्शजात धुनाना
यस्या देवैः सदेशैर्भुवि जयतितरां मुक्तिदोन्मत्तगङ्गा ॥१॥
वीक्षामात्रेण पुंसामगणितजनिज पातकं नाशयन्ती
स्नानात्सर्वार्थदात्री हसति भुवि च या भानुजां फेनजालैः ।
या चान्यासां नदीनां प्रकटमगयतो ह्यद्रसङ्गं विनापि
ख्यातं लोके महत्त्वं प्रतिवदतितरां वारिघोषैः किमुच्चैः ॥२॥
श्वेतं स्वाभाविकं या मुनिगणतिलकैः स्नानधौतैश्च पीतं
वासःप्रक्षालनेन प्रतिमुनियतिनां धारयत्यापरागम् ।
राज्ञीनामङ्गधौतैः पिशुनमृगमदैरीशपूजावशिष्टैः
शोणं कृष्णं च वर्णं स्वपयसि दधती चित्रवर्णा विभाति ॥३॥
यस्याः स्नानं त्रिकालं पयसि विदधतां सद्गुणां योषितां वा
वक्त्रेभ्यो नामघोषः प्रकटितनूतनो स्वामिनारायणस्य ।
निर्यन्मिथोऽम्बुघोषैः प्रतिदिशमटतां भास्करैः किङ्कराणां
साशङ्कं दूरगाणां हरिविमुखदृशां कर्णशूलायते वै ॥४॥
प्रायश्चित्तैरभाव्यानपि कलुषचयान्सद्य एव प्रसी या
सैरिल्लेखकस्याप्यनुदिनमघकृद्दण्डविघ्नान्विदात्री ।
दूरस्थैरन्तकालेऽप्यणुमितमपि चेदम्बु यस्याश्च पीतं
स्याच्चेत्ते त्यक्तदेहाः सुरवरवनितासेव्यतां यान्ति सद्यः ॥५॥
यस्यास्तीरे विहङ्गान्निवसत उदके मीननक्रोरगादीन्
हातु देहांश्च दृष्ट्वा दिवि सुरवनितास्तत्कृतेऽन्योन्यकोपाः ।
केशाकेशिप्रमर्दं विदधति मम वा एष ते नैव मेऽय
वामादित्थं ब्रुवन्त्यो झटिति मृतिमितास्ताश्रयन्ते विमानैः ॥६॥
यस्यास्तीरे कृतानां व्रतजपतपसां श्राद्धदानादिकानां
पुण्यं स्यादक्षयं वा अमरपितृगणा तर्पणाद्भूरितृप्ति ।

नानायज्ञादिपुण्यं त्विह सकलजनैः स्नानतो लभ्यते वै
श्रेयस्कामैस्ततो या नृभिरनिशमसौ सेव्यते सर्वकामैः ॥७॥
दुष्टान्पापान्विगर्ह्यानपि पतितजनान् स्नानमात्रेण सद्यः
स्वर्गार्हान्कुर्वती या सुकविभिरुदिता नूनमुन्मत्तगङ्गा ।
माहात्म्यं नैव यस्या जगति भगवता स्वात्मसाद्वै कृताया
वक्तुं केऽपि क्षमन्ते भुजगपतिमुखा वर्णयन्तोऽपि नित्यम् ॥८॥

इति शतानन्दमुनिविरचितमुन्मत्तगङ्गाष्टक सरसङ्गिजीवनस्थं समाप्तम् ।

---

## गोमतीस्तोत्रम् ।

### शार्दूलविक्रीडितं वृत्तम् ।

श्रीवृत्तालयसन्निधौ कलिमलप्रध्वंसिनी संस्थिता ।
सद्भक्तैरमितैः प्रसन्नवदनैः स्नानात्सह श्रीहरेः ।
सर्वेशस्य गृहीतमानवतनोर्नानाविधैर्विभ्रमै-
र्वन्द्येशैरिह गोमती क्षितितले वर्वर्ति सर्वोपरि ॥१॥
सोपानै रुचिरायतैररचितै रम्यैः श्रियं बिभ्रती
कीर्तिर्यामवगाहते नृपजनेर्नारायणस्योज्ज्वला ।
हंसीव प्रतिवासरं भगवतो धर्मान्वयं रक्षतो वन्द्येशै० ॥२॥
यत्र स्नानकृतां भवत्यतुलितं पुण्यं जनानां सदा
पूर्वेषां घुसदां च यज्जलकृतात्तृप्तिर्मशं तर्पणात् ।
यत्तीरे विहितैस्तपोमतजपैः सिद्धिर्मनोवाञ्छिता वन्द्येशै० ॥३॥
स्नानादप्युरजन्मजातदुरितव्रातो व्रजत्यस्तवां
यस्यां भास्वरसूनुकिङ्करमहात्रासावमुक्तिर्ध्रुवम् ।
शुद्धान्तःकरणैर्मुनीन्द्रनिकरैर्या सेविता सर्वदा वन्द्येशै० ॥४॥

आम्रैर्दाडिमनारिकेरपनसैराम्रातकैरागमे
रम्भाद्यैः फलमानप्रविटपैर्मन्दारवृन्दैर्युते ।
या रम्योपवने कदम्बतिलकैः संराजते सर्वदा वन्देशै० ॥५॥
निर्धौतैरभिषेकतश्च तिलकैः काश्मीरचन्द्रैः सतां
वर्णं भास्वरुणं वलक्षसलिलैर्या पिङ्गलं बिभ्रती ।
चैलक्षालनतो यतिमतिसतां काषायरागं मुदा वन्देशै० ॥६॥
नीपैश्चन्दनपारिजातबकुलैराम्रमजैः केसकैः
शालैर्मञ्जुलवञ्जुलैः कुरवकैः पुन्नागचाम्पेयकैः ।
वृक्षैर्या फलभारभारविनतैस्तीरस्थितै राजिता वन्देशै० ॥७॥
आयान्तं समधिष्ठितं गतिवरां माणिक्यवर्णां घृत
वाहां चारुविभूषणांबरधरं श्रीस्वामिनारायणम् ।
भक्तैराह्वयतीव या सुललितैः स्थानाय पक्षिस्वनैर्वन्देशै० ॥८॥
श्रीनारायणमाह्वयन्त इव तं वातेरितैः पल्लवैः
सेवन्ते नरजन्महेतुदुरितव्रातक्षयाय द्रुमा ।
छायाभिर्निखिलेश्वरं भवहरं यत्तीरदेशोद्भवा वन्देशै० ॥९॥
पीतं चेदपि दूरसंस्थितजनैर्यस्याः पयः पावनं
देहान्ते शमनानुगमजभयात्तीव्राद्विमुक्तैर्द्रुतम् ।
लभ्या यज्ञतपोव्रतैः सुविहितैः धीरञ्जसा प्राप्यते वन्देशै० ॥१०॥
श्रीमद्भक्तिनृपात्मजस्य सहजानन्दस्य सन्तुष्टये
साधूनां विमलात्मनां भगवतस्तस्याश्रितानां हरेः ।
कृष्णानन्दसमाह्वयेन रचितं सन्मङ्गलं वर्णिना
गोमत्याः स्तवनं शुभं वितनुतां वा शृण्वतां गायताम् ॥११॥

इति अचिन्त्यानन्दवर्णिविरचितं गोमतीमाहात्म्यस्तोत्रं समाप्तम् ।

## सरस्वतीस्तोत्रम् ।

श्रीमद्यदीपालिविरोचमाने स्थाने स्थितां चारुसहासवक्त्राम् ।
चराचराणामुपकारकर्त्रीं वन्दामहे देवि सरस्वति त्वाम् ॥१॥
रूपानुरूपावयवैरुपेतां प्रसन्नताभ्यासविशेषलभ्याम् ।
विश्वेश्वरीं बिम्बफलाधरोष्ठीं वन्दामहे० ॥२॥
महानुभावैरपि वन्द्यमानां स्वैश्वर्यदां हेमविभूषणाढ्याम् ।
संराजमानां निजहंसपृष्ठे वन्दामहे० ॥३॥
यथा प्रबन्धेषु सुबोधधीरैर्निष्किञ्चनानां विदुषां च साक्षात् ।
विज्ञाय तत्त्वं धनरूपगीतां वन्दामहे० ॥४॥
तथैव लीला बहुशक्तिभाजा नारायणीं वै प्रवदन्ति वाचम् ।
निवारितानेकजनाज्ञभावां वन्दामहे० ॥५॥
वीणां दधानामपि कच्छपीं स्वां महच्च पाणौ प्रसरत्प्रतापम् ।
नानार्थसंयुक्तसुरम्यशास्त्रं वन्दामहे० ॥६॥
अनर्घ्यकेयूरविपक्तपाणिं धातुश्च पुत्रीमतुलप्रभावाम् ।
विशालभाले कृतपत्रलेखां वन्दामहे० ॥७॥
सुकम्बुकण्ठीं रमणीयवेषां कण्ठप्रदेशार्पितपुष्पमालाम् ।
सदा किशोरीं कमनीयरूपां वन्दामहे० ॥८॥
पाणिद्वये कङ्कणमादधानां चन्द्राननां सुन्दरदन्तपङ्क्तिम् ।
सुरासुरप्रार्थ्यतमाङ्घ्रिपद्मां वन्दामहे० ॥९॥
समग्रशास्त्रे प्रविभक्तरूपां तारानुकाराम्बरधारिणीं ताम् ।
प्रफुल्लपद्मायतपत्रनेत्रां वन्दामहे० ॥१०॥
विधृत्य हस्ते परिचालयन्तीं स्थलारविन्दं कमनीयशोभम् ।
सयावदौग्धादिनिवेदिताग्रां वन्दामहे० ॥११॥

श्रीमद्वार्मिकपादपद्मभजतां चिन्तान्धकारापहं
संसारार्णवलङ्घनं च पठतां तापत्रयोन्मूलनम् ।
त्यागानन्दसुखेन श्रीप्रचरितं बुद्धिप्रदं विग्रहं
वाणीस्तोत्रकमाशु मङ्गलमिदं सव्यातनोरिष्टदम् ॥१२॥

इति त्यागानन्दवर्णिविरचितं सरस्वत्यष्टकं सम्पूर्णम् ।

## मुक्तानन्दमुनिकृत वटपत्तननरेशोपदेशः ।

निपुणमतिमता गुणाश्च ये स्युः शमदमशीलदयादयो हि तेषाम् ।
फलमिदमुदितं नरेन्द्र ! शास्त्रे भगवत एव पदाम्बुजे रतिर्या ॥१॥
यदि हरिचरणाम्बुजे क्वचिच्च दृढतरसंस्थितिमाप्नुयान्न भक्त्या ।
इतरगुणगणेन किं तदानीं भवजलधिभ्रमहेतुना फलं स्यात् ॥२॥
भवदवशिखिदग्धमानसानां निरवधिदौःस्थसुखं विचिन्वतां वै ।
हरिचरणसरोजमेकमेव श्रुतिगदिताखिलसौख्यमूलमस्ति ॥३॥
पदकमलसमीक्षणेन साक्षात्प्रभवति सौख्यमिति ध्रुवं न चित्रम् ।
अपि भवपरितापितोऽन्तरात्मा हरिगुणसंश्रवणेन शान्तिमेति ॥४॥
अघभरहरणेऽत्र भक्तिभाजां प्रभवति नाम हरेर्हि तत्र चित्रम् ।
अपि विवशजनैरुदीरितं यद्दुरितचयं विनिहन्ति सद्य एव ॥५॥
समवति परितोऽन्यदुर्निवार्याश्रितजनमान्तरबाह्यवैरिसङ्घात् ।
क्षणमपि च न विस्मरत्यमुं यज्जगति ततः प्रभुनाम तस्य सार्थम् ॥६॥
स्थिरचरवपुधारिणां स आत्मा वपुरसुधीन्द्रियपाशसंश्रितानाम् ।
हृदयसरसिजेऽस्ति दिव्यमूर्तिर्भुवि सदनुग्रहतः स लभ्यते च ॥७॥
चरणकमलमेतदीयमेव प्लवमिह ये विबुधा श्रयन्ति तूर्णम् ।
पृथुभवजलधिं त एव नूनं सपदि तरन्त्यपरास्तदन्ति नक्राः ॥८॥

इति सत्सङ्गिजीवनस्थं उपदेशाष्टकं समाप्तम् ।

## उपदेशपञ्चकम् ।

सकलजनविमोचनैकहेतुर्भुवनगुरुः कृपया यदा मुकुन्दः ।
प्रकटितकरुणार्द्ररम्यमूर्तिर्मिलति तदैव भवप्रवाहमुक्तिः ॥१॥

સર્વ જનોના મોક્ષમાં મુખ્ય ઉપાયભૂત અને સર્વ જગતના ગુરુ એવા મુકુંદ-મોક્ષદાતા ભગવાન્ જ્યારે કરુણા કરીને રમણીય દિવ્ય મૂર્તિથી આ લોકમાં પ્રકટ થાય છે ત્યારેજ જન્મમરણના પ્રવાહરૂપ સંસારમાથી મુક્તિ મળેછે

યદ્યપિ મોક્ષમાં ધર્મ જ્ઞાન ભક્તિ આદિક ઉપાયો બતાવ્યા છે પરંતુ તે અચેતન હોવાથી સ્વયં ફળજનક ન થતાં પરમાત્માની પ્રસન્નતાદ્વારા ઉપાય થાય છે જેથી તે મુખ્ય ઉપાય નથી મુખ્ય ઉપાયતો એક સ્વય ભગવાનજ છે, એમ શ્રુતિસ્મૃતિઓ કહેછે–'अमृतस्यैष सेतुः' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥' 'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं' 'मुख्योऽयं सर्वसिद्धिकृत्' 'सर्वस्य शरणं सुहृत्' 'सर्वलोकशरण्याय' 'अहमस्मि तवैवेति...ददात्यभयमुत्सुकः' ઇત્યાદિ. 'कालमायापापकर्मयमदूतभयादहम् । श्रीकृष्णदेवं शरणं प्रपन्नोऽस्मि स पातु माम्' આ શરણમન્ત્ર પણ ઉપરોક્ત અર્થનેજ કહેછે

ગુરૂ એટલે તત્ત્વ હિત અને પુરૂષાર્થના ઉપદેષ્ટા સર્વને વેદ ગીતાદિદ્વારા પ્રથમ ઉપદેષ્ટા ભગવાન્ છે તેથી તેજ નિરુપાધિક નિર્દોષ સમર્થ પ્રથમ ગુરૂ છે. બીજાતો એકદેશી સોપાધિક અને સદોષ ગુરૂઓ છે. તેથીજ શાસ્ત્રો ભગવાનને મુખ્ય આદિગુરૂપણે કહેછે–'पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्' 'चराचरगुरुं हरिं' 'ममाप्यखिललोकानां गुरुर्नारायणो गुरुः' 'तमिमं सर्वसम्पन्नमाचार्यं पितरं गुरुं' 'त्रिलोकगुरुणा' 'कृष्णं वन्दे जगद्गुरुं' ઇત્યાદિ. બીજાઓ વાસ્તવિક ગુરૂઓ નથી એમ બ્રહ્મા કહેછે 'यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुं' ઇત્યાદિ

સ્વસ્વરૂપથી સ્વધામમા રહેલા ભગવાન્ દેવમનુષ્યાદિકને અગોચર હોવાથી તેનું ધ્યાન આરાધન શી રીતે કરી શકાય ? અને ધ્યાન આરાધન વિના મોક્ષ પણ ક્યાથી મેળવી શકાય ? જેમ ધ્યેય આરાધ્ય સ્વરૂપના દર્શન વિના ધ્યાન આરાધન બની શકે નહિ તેમ આરાધ્ય સ્વસ્વરૂપ બતાવવુ તે પણ અવતાર ધારણ કર્યા વિના બની શકે નહિ, વળી કોઇપણ ધ્યાન આરાધન ન કરે તો પોતાની પણ અકિંચિત્કરતા ગણાય અને પોતામા રહેલા કારુણ્યાદિ ગુણોની પણ નિષ્ફળતા ગણાય, ઇત્યાદિક વિચાર કરીને ભગવાન્ જ્યારે અપાર કારુણ્ય સૌશીલ્ય, વાત્સલ્ય, ઔદાર્યાદિક ગુણોની પ્રેરણાથી સ્વેચ્છાએ કરીનેજ પોતાના ગુણ ઐશ્વર્ય વિભૂતિની સાથે આરાધ્ય ધ્યેય સ્વસ્વરૂપ બતાવી આરાધન બતાવાપૂર્વક આરાધન કરાવા માટે દિવ્ય મનોહર મૂર્તિથી પૃથ્વીઉપર પ્રગટ નયનગોચર થાય છે ત્યારેજ તેમના ધ્યાન આરાધનથી મોક્ષપ્રાપ્તિ થાય છે તે કહ્યુ છે કે–'परित्राणाय साधूनां' 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' 'अजोऽपि सन्नव्ययात्मा' 'जगदुपकृतिमर्त्यं' 'जगतामुपकाराय न सा कर्मनिमित्तजा' 'मूर्तिं न पुरुकृपया' 'कृपयावतीर्य' ઇત્યાદિ ॥१॥

विषयविषमहोदधिं तरीतु भवति तरीर्गुरुपादपद्ममेकम् ।
निगमगदितसाधनं विना त कृतमपि नैव सुखाय दु खमुक्त्यै ॥२॥

વિષયવિષરૂપ મહાસાગરને તરવામાટે ગુરૂચરણકમળરૂપ એક–પ્રધાન નૌકા છે, એટલે ગુરૂના આશ્રયથી તરી શકાય છે, ગુરૂચરણકમળરૂપ નૌકાનો આશ્રય કર્યા વિના બીજા વેદોક્ત સાધનો કરે તથાપિ તે સાધનો સુખપ્રાપ્તિ અને દુ ખનિવૃત્તિમાટે થતા નથી

વિષયોને મહોદધિની ઉપમા આપી છે તેથી વિષયોની અગાધતા દુષ્પૂરતા અને દુ શકતા સૂચવાયછે તે કહ્યુ છે કે–'तृष्णाब्धिरगाधेयं दुष्पूरा केन पूर्यते' ઇતિ વિષયોને વિષની ઉપમા આપી છે તેથી અનર્થાધિક્ય અને અને દુસ્ત્યજતા સૂચવાયછે પ્રસિદ્ધ વિષતો પાનથી અનર્થ કરે છે અને આ વિષતો દર્શનમાત્રથી અનર્થ કરેછે એવો વિશેષપણ આ વિષમા છે આ અર્થ શાસ્ત્ર કહેછે–'विषयान् विषवत्त्यजेत्' 'विषयेन्द्रियसंयोगात् परि-

णामे विषमिव' 'विषया विनिवर्तन्ते रसवर्जं' 'जिह्वकृतो बहुय सपत्न्य इव गेहपतिं लुठन्ति' 'विद्वांसमपि कर्षति' 'ऋषि नारायण मृते' 'न जातु काम कामानामुपभोगेन शाम्यति' ઇત્યાદિ વિષયવિરતિ વિના પરમાત્મામાં રતિપણ ન થાય એમ કહેછે 'विषयतो विरतिश्च हरौ रति' 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' 'विषयाविष्टचित्तानां विष्ण्वावेश सुदुष्कर' ઇત્યાદિ

ગુરૂપાદરૂપ નૌકાના સમાશ્રયથીજ સર્વાર્થસિદ્ધિ થાયછે એમ શાસ્ત્રો કહેછે– 'गुरुकर्णधारम्' 'आचार्य प्लाविता तस्य ज्ञान प्लव इहोच्यते' 'निम जयोन्मज्जता घोरे भवाब्धौ परमायणम् । सन्तो ब्रह्मविद शान्ता नौद्दढेवाप्सु मज्जताम्' 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन ' 'एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत्' 'देवताया गुरोश्चापि मन्त्रस्यापि प्रकीर्तनात् । ऐहिका मुष्मिकी सिद्धिर्द्विजस्यास्त न सशय ' 'यस्माद्देवो जगन्नाथ कृत्वा मर्त्यं मयीं तनुम् । मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥' 'त्रिपु भक्ति सदा कार्या सा हि प्रथमसाधनम्' 'उपायोपेयभावेन तमेव शरण व्रजेत्' 'गुर्वेकैलब्धोपनिषत्सुचक्षुषा' ઇત્યાદિ

સર્વે કર્મો ગુરુદ્વારાજ શ્રેયોહેતુ થાયછે માટેજ પ્રથમ ગુરુનો આશ્રય કરવાનો કહેછે 'स गुरुमेवाभिगच्छेत्' 'तस्माद्गुरु प्रपद्येत' 'लब्धानुग्रह आचार्यात्तेन सन्दर्शितागम । महापुरुषमभ्यर्चेत्' 'गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्न तत किं तत किं तत किं तत किम्' ઇત્યાદિ ॥२॥

सुरनरयुतमण्डमीशमायावृतमिदमावरणैः समेतमस्ति ।
अत इह नहि कोऽपि मोक्षदाता प्रकटहरिं गुरुमन्तरा सदैव ॥३॥

સુરનરે યુક્ત અને આવરણે યુક્ત એવું આ બ્રહ્માંડ પરમાત્માની માયાથી આવૃત છે, માટે આ જગતમાં પ્રકટ હરિરૂપ ગુરૂ વિના કોઈપણ મોક્ષદાતા નથી

સર્વ જગતની માયાવૃતતા શાસ્ત્રમાં કહીછે–'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥' 'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः' 'यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्ते' ઈત્યાદિ.

પ્રકટ હરિરૂપ ગુરૂ વિના કોઈ મોક્ષદાતા નથી પોતે એક ભગવાનજ મોક્ષદાતા છે એમ શાસ્ત્રો કહેછે—'भजन्ति स्वगुरुं 'हरिं' 'हरिं गुरुं पद्मभुजामधीश्वर' 'स वै प्रियतमश्चात्मा यतो न भयमण्वपि । इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः.' 'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः' 'नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् । आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते' 'प्रसन्नो भगवान् येषामपवर्गगुरुर्हरिः.' 'धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेयमात्मनः । एक एव हरेस्तत्र कारणं पादसेवनम्' 'संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् । विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्' ઈત્યાદિ ॥૩॥

जगति तमपहाय यो गुरुः स्याद्भवति तदाश्रयिणा भवान्न मुक्तिः ।
स्वयमपि पतितो भवाब्धिपूरे कथमिव मोचयति प्रपन्नजीवम् ॥४॥

પ્રકટ હરિરૂપ ગુરૂનો ત્યાગ કરીને જગતમા જે ગુરૂ થયો હોય તો તેનો આશ્રય કરનારાને ભવમોક્ષ ન થાય, કેમકે પોતેજ ભવાબ્ધિપૂરમા પડ્યો છે તો પોતાને શરણે આવેલા જનોને શી રીતે તારી શકે? નજ તારી શકે તે કહ્યું છે કે 'न शिला तारयेच्छिलाम्' 'भिन्ननावाश्रितस्तब्धो यथा पारं न गच्छति । ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयात्' ઈત્યાદિ ॥૪॥

यदि मनसि हितं विधातुमिच्छा हरिजनसङ्गममेकमेव कुर्याः ।
निगमगदितलक्षणा हि सन्तो भुवि विचरन्त्यतिदुःखिदीनमुक्त्यै ॥५॥

જો મનમા કલ્યાણ મેળવવાની તારે ઈચ્છા હોય તો પ્રથમ કુસંગીનો સગ ત્યાગ કરવાપૂર્વક એક હરિજનનોજ સમાગમ કરવો શાસ્ત્રોક્ત લક્ષણવાળા સતો પૃથ્વી ઉપર અતિદુઃખી દીન જનોની મુક્તિમાટે વિચરેછે, માટે સુલભ છે

ભગવાનમાં ભક્તિવૃદ્ધિ થવા માટે પ્રથમ સત્સમાગમની આવશ્યકતા કહી છે-'प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ! । नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम्' 'सत्सङ्गलब्धया भक्त्या' 'नित्यं सन्तोऽभिगन्तव्या.' 'वासुदेवार्पणं साक्षादुपासीत महामुनीन्' 'ततो दु सङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् । सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभि. ॥' 'नैषां मतिस्तावदुरुक्रमाङ्घ्रि......महीयसां पादरजोभिषेकं निष्किञ्चनानां न वृणीत यावत्' 'भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः । सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥' 'स एव साधुषु कृतो मोक्षद्वारमपावृतम्' 'त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः । सङ्गस्तेष्वथ ते प्रार्थ्यः सर्वदोषहरा हि ते' 'सतां प्रसङ्गान्मम वीर्यसंविदो' ઈત્યાદિ

સત્સંગનો મહિમા પણ અપાર કહ્યો છે-'संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम्' 'नह्यम्मयानि तीर्थानि' 'तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य' 'न रोधयति मां योगः' ઈત્યાદિ

સંગ કરવા યોગ્ય સત્પુરૂષોના લક્ષણો પણ શાસ્ત્રમાં કહ્યા છે-'तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् । अजातशत्रवः शान्ता. साधवः साधुभूषणाः' 'कृपालुरकृतद्रोहस्तितिक्षु. सर्वदेहिनाम्' ઈત્યાદિ.

ઉક્ત લક્ષણવાળા સતો પૃથ્વીમાં દુઃખી દીન જનોના શ્રેયમાટે સદા વિચરેછે-'अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य' 'विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि' 'भगवन् ! भवतो यात्रा स्वस्तये सर्वदेहिनाम्' 'सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम्' 'साधवो दीनवत्सला.' ઈત્યાદિ ॥५॥

इति उपदेशपञ्चकं समाप्तम् ।

## शार्दूलविक्रीडित वृत्तम् ।

आदौ प्रेमवतीवृपाङ्गजनन सर्वैक्तीर्थाटन
दुष्कर्मोपशम च साधुशरण सद्धर्मसंस्थापनम् ।
हिंसावर्जितभूरियज्ञकरण मूर्तिप्रतिष्ठापन
मार्यस्थापनमक्षराख्यगमन सत्सङ्गिसञ्जीवनम् ॥१॥
आदौ रामतपोवनाभिगमन हत्वा मृग काञ्चन
वैदेहीहरण जटायुमरण सुग्रीवसम्भाषणम् ।
वालीनिग्रहण समुद्रतरण लङ्कापुरीदाहन
पश्चाद्रावणकुम्भकर्णहनन चैतद्धि रामायणम् ॥२॥
आदौ देवकजा सुगर्भजनन गोपीगृहे वर्धन
मायापूतनजीवतापहरन गोवर्धनोद्धारणम् ।
कसच्छेदनकौरवादिहनन कुन्तीसुतापालन
मेतद्भागवत पुराणकथित श्रीकृष्णलीलामृतम् ॥३॥
आदौ पाण्डवधार्तराष्ट्रजनन लाक्षागृहे दाहन
द्यूतस्त्रीहरण वने विहरण मत्स्यालये वर्तनम् ॥
लीलागोग्रहण समुद्रतरण सन्धिक्रियाजृम्भण
पश्चाद्भीष्मसुयोधनादिमरण चैतन्महाभारतम् ॥४॥

---

श्रीमच्छारदपूर्णचन्द्रविलसत्स्मेरानन श्रीहरिं
तुङ्गे पीठवरे स्थित परिवृत सद्भक्तवृन्दैर्यथा ।
हाराभिर्विधु मर्च्यमानमुरुधा तैश्चन्दनै कौसुमै
हारै शेखरपङ्क्तिभिश्च हृदये शुक्लाम्बर चिन्तये ॥१॥
श्रीकृष्णाय तमोहराय हरये श्रीनीलकण्ठाय ते
श्रीनारायणनामधेयधृतये धर्मात्मजायात्मने ।

सद्धर्मावनसम्भवाय हरियुक्कृष्णाभिधायानिशं
षण्णामावलिसंयुताय सहजानन्दाय वन्दामहे ॥२॥
श्रीवृत्ते वटपत्तने नृपपथे भूपस्य हर्म्याङ्गणे
नागेन्द्रोपरिरूढमीडितपदं भूपेन भक्त्या भृशम् ।
नानारत्नमणीन्द्रमौक्तिकलितं हेमोद्भवं भूषणं
मूर्धाग्रे दधतं दधामि हृदि तं श्रीस्वामिनारायणम् ॥३॥
श्रीनारायणमात्तमानुषतनुं भूमौ कृपासागरं
भक्तैश्चन्दनपुष्पहारनिकरैः सम्पूज्यमानं निजैः ।
पीठस्थं तुलसीस्रजं च दधतं दक्षे करे सुन्दरं
स्मेरास्यं सितसूक्ष्मवाससमहं श्रीनीलकण्ठं भजे ॥४॥
श्रीमन्नूतननीरदाभतनवे श्रीमाधुरीमूर्तये
स्वङ्गत्तुङ्गतुरङ्गसङ्घिवृतये चञ्चलद्धासले ।
नानाहारमनोहराय हरये यष्ट्या लसत्पाणये
तस्मै श्रीगुरवेऽभवाय सहजानन्दाय वन्दामहे ॥५॥
श्रीमत्स्वीयपदाब्जचिन्तनविधिं लोके स्वतो दुष्करं
दृष्ट्वाविष्कृतरम्यमूर्तिमखिलानुद्धारयन्तं श्रितान् ।
मायावादकुतर्कविभ्रमहरं श्रीमत्कृपावीक्षणात्
तं ध्यायामि सदा जगद्गुरुमहं श्रीस्वामिनारायणम् ॥६॥
श्रीमत्केतुयवाष्टकोणकमलस्वस्त्यूर्ध्वरेखासृणि-
भ्राजज्जम्बुफलाशनिश्रितलसद्दक्षाङ्घ्रिमब्जप्रभम् ।
मत्स्यार्धेन्दुधनुस्त्रिकोणकलशव्योमोल्लसद्गोपद-
जुष्टादक्षपदं स्मरामि सहजानन्द सदा तं मुदा ॥७॥
श्रीधाम्नि पुरुषोत्तमो गुणनिधिर्यो मद्धामेश्वरो
मुक्तैर्जुष्टपदाम्बुजो वरतरैश्वर्यैरपेतः प्रभुः ।

अन्तर्याम्यखिलात्मनां भवहरं सर्वेश्वराधीश्वरं
तं ध्यायाम्यवतारिणं मुनिपतिं श्रीस्वामिनारायणम् ॥८॥
श्रीमद्धर्मधुरन्धरं सुखकरं कारुण्यपाथोनिधिं
सन्नाथं निगमान्तगीतयशसं पाथोदनीलप्रभम् ।
धर्मस्वीकृतभूतलं स्वमहसा धर्मात्मजं स्वामिनं
सद्धाम्नः पतिमक्षरस्य सहजानन्दं हरिं तं भजे ॥९॥
श्रीमद्दुर्गपुराधिपस्य सदने स्वच्छे विशालाङ्गणे
प्रोत्तुङ्गे मणिरत्नहेमरचिते सिंहासने सुस्थितः ।
मुक्तानन्दमुकुन्दमुख्यमुनिभिर्भक्तैर्गृहस्थैरपि
रेजे सम्परिवेष्टितो हरिरजस्ताराभिरिन्दुर्यथा ॥१०॥
पातुं धर्ममधर्ममुत्खनयितुं श्रीभक्तिधर्माङ्गतो
जातायोत्तरकोसलेषु दयया सर्वेश्वरेशाय च ।
वृष्टिं वाक्यसुधारसैर्विदधते नैजैर्निजानां मुहुः
तस्मै श्रीहरये नमोऽस्तु सहजानन्दाय सद्वर्णिने ॥११॥
स्नातं चन्दनचर्चितं निजजनैः पुष्पस्रजालङ्कृतं
प्रातः सूर्यमयूखसेवितमुरः श्रीचन्द्रशालोपरि ।
धृत्वा रोटकमेकपाणितलके भक्षन्तमन्यहस्तेन तं
भुञ्जानं प्रविलोक्य सेवकगणान् वन्दे सदा स्वामिनम् ॥१२॥
कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं सुललितं कण्ठे च मुक्तावलिं
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥१३॥
यः साक्षाद्भगवान् क्षराक्षरपरः कृष्णः स एव स्वयं
भक्तौ धर्मतः आस भूरिकृपया श्रीस्वामिनारायणः ।

मानुष्यं भुवि नाट्यन्निजजनाचार्यैस्स्वधर्मे स्थितः
कृष्णं प्राह परोक्षवन्नतु ततोऽन्यः सोऽस्ति यस्स स्वयम् ॥१४॥
नित्यं संरममाणमक्षरपदे ब्रह्मात्ममुक्तव्रजैः
श्रीराधादिसमर्चिताङ्घ्रिकमलं नैकाण्डनाथानतम् ।
छन्दःशेषमहेशगीतयशसं योगीन्द्रहृच्चिन्तितं
ध्यायामीष्टमहं मुदाऽखिलगुरुं श्रीस्वामिनारायणम् ॥१५॥
यो भूमेरुदडीडयत्स्वमहसा वात्येव तूलं सुरा-
मांसप्राशमयोपधर्ममभितः कार्ष्णं वृषं पोषयन् ।
स्वैश्वर्यं समपप्रथल्लघु नृणां स्वान्तासुरोधाद्दरौ
श्रीस्वामी जयतीश्वरः स सहजानन्दो ममानन्ददः ॥१६॥
जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥१७॥
यं ब्रह्मा वरुणेन्द्ररुद्रमरुतस्स्तुन्वन्ति दिव्यैः स्तवै-
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥१८॥
मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥१९॥
स्त्रीपुंसैर्जयतल्पपत्तनमहिर्वादीवटे वेष्टिते
दोले तूलपटोपबर्हणपदैर्जुष्टे चलन्मूर्तये ।

हस्ते कोमलकर्कटीफलयुगं धृत्वा विलोक्य स्वकान्
दन्तैश्चर्वणचातुरीं विदधते तस्मै नमः स्वामिने ॥२०॥
वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥२१॥
प्रादुर्भावमुपेयुषः क्षितितले धर्मं कलौ रक्षितुं
सर्वस्मात्परतः परस्य सहजानन्दस्य सर्वेशितुः ।
शिक्षापत्रविलेखनाय विहितारम्भस्य दिव्याद्भुतं
रूपं मे हृदये चकास्तु सततं ध्येयःपदं योगिनाम् ॥२२॥
स्वीये धाम्नि सदाक्षरे परतरे संसेविताङ्घ्रिद्वयो
भक्तैर्ब्रह्मशरीरिभिर्य उरुधा वेदान्तवेद्यः प्रभुः ।
नैकाण्डोद्भवपालनादिकरपुंमायानियन्ता स्वराट्
कारुण्याम्बुनिधिर्नमामि तमहं श्रीस्वामिनारायणम् ॥२३॥

---

मात्स्यं कूर्मं वराहं कपिलमथ हरिं वासुदेवं च वैन्यं
दत्तात्रेयं च हंसं नरहरिमृषभं वामनं पर्शुरामम् ।
यज्ञं रामं कुमारं हयशिरसमथो नारदं राजराजं
व्यासं कृष्णं च बुद्धं धृतपुरुवपुषं नौमि नारायणं त्वाम् ॥१॥
धर्मस्त्याज्यो न कैश्चित्स्वनिगमविहितो वासुदेवे च भक्ति-
र्दिव्याकारे विधेया सितघनमहसि ब्रह्मणैक्यं निजस्य ।
निश्चित्यैवान्यवस्तुन्यणुमपि च रतिं सम्परित्यज्य सन्त-
स्तन्माहात्म्याय सेव्या इति वदति विजान् धार्मिको नीलकण्ठः ॥२॥

विज्ञानालोकशून्ये घनतमतमसि स्फीतहिंस्रप्रचारे
दुर्लक्ष्यक्षेममार्गे प्रसरदुरुकलौ मानवे मण्डलेऽस्मिन् ।
श्रेयोमार्गं स्वगोभिः सपदि विशदयन् यः क्षितावाविरासीत्
यद्भासा भाति सर्वं स जयति भगवान् स्वामिनारायणोऽयम् ॥३॥
सर्वाविर्भावहेतुः परमरसनिलयो योऽवतीर्येह लोके
संसारव्यालदंशप्रसरदुरुविषोदग्रवेगापहर्तृ ।
धर्मात्मज्ञानभक्तिप्रकटपरतरस्वस्वरूपोपदेशं
प्रादाद्वाक्यामृतं स्वं स जयति भगवान् स्वामिनारायणोऽयम् ॥४॥
दृष्टाः स्पृष्टा नता वा कृतपरिचरणा भोजिताः पूजिता वा
सद्यः पुंसामघौघं बहुजनिजनितं घ्नन्ति ये वै समूलम् ।
प्रोक्ताः कृष्णेन ये वा निजहृदयसमा यत्पदे तीर्थजातं
तेषां मातः ! प्रसङ्गात्किमिह ननु सतां दुर्लभं स्यान्मुमुक्षोः ॥५॥

---

मुनीशारं सारं शुचिकनकबुट्टं परिदध-
न्निचोलं कौसुम्भं कटितटपटं चारुणरुचिम् ।
बहून् हारान् हेमान् वरवलयकेयूरमुकुटान्
हसद्वक्त्रेन्दुर्मे हृदि जयतु नारायणमुनिः ॥१॥
य ईशोऽपि स्वेच्छाधृततनृतनुरानन्दनिलयः
कृपासिन्धुर्बन्धुर्भवजलनिधौ दुःखितनृणाम् ।
सकामैर्निष्कामैरपि सुरनरैः सेव्यचरणं
नमाम्यात्मारामं तमहमिह नारायणमुनिम् ॥२॥
सदानन्दाम्भोधिः स्मितरुचिरपूर्णेन्दुवदनः
प्रफुल्लाम्भोजन्मच्छदसदृशशोभाक्षियुगलः ।
कृपापारावारः श्रितसकलजीवातिसुखदो
महाश्रेयोमूर्तिर्जयति स हि नारायणमुनिः ॥३॥

नानापद्यसुकाव्यदीप्ररचनादक्ष स्वधर्मेस्थिरं
छन्दोभिः स्वकृतैर्हरिं नृपभुव सम्प्रीणयामास य ।
मैत्रीं तेन गत स्वनमेवचनै सहासयन्त स्थिर
ब्रह्मानन्दमुनिं नमामि तमह देशाद्यभिज्ञ मुदा ॥११॥
प्राप्तो यासमहर्निश च सहजानन्दस्य य सन्निधौ
भीत्या त समतोपयद्यतिपतिर्भक्त्यानुवृत्त्या भृशम् ।
वैराग्योज्झितसर्वलोकविभव चैकान्तधर्मप्रिय
वन्दे त विदुषां वर शुकमुनिं शान्तस्वभाव सदा ॥१२॥
अजस्र सम्प्राप्त परमसहजानन्दनिकटे
स्थितिं तत्सेवाया निपुणमनवद्य मतिमताम् ।
सता चाद्य वन्दे सदयहृदय नैष्ठिकवर
मुकुन्दानन्दाख्य धृतशुभगुणाकल्पमनिशम् ॥१३॥
धर्मात्मजश्रीहरिकृष्णभक्तौ जितेन्द्रिय तत्परमस्ततन्द्रिम् ।
नारायणानन्दमह नमामि क्षमाधर वर्णिवर सुशीलम् ॥१४॥
शास्त्रज्ञ घयुनविरक्तिभक्तियुक्त सद्वन्द्य मुकुटमणि बृहद्व्रतानाम् ।
वन्देऽह कविवरमत्र वासुदेवानन्दाख्य विनयदयाक्षमाद्युपेतम् ॥
उदार निर्वैरं निगमगदिताचारनिरत
जितस्वान्त शत्रु पठितनिजविद्य सुखकरम् ।
अखण्डानन्दाख्य नृपजहरिकृष्णस्मृतिपर
प्रशान्त मुक्तेन्द्र प्रतिदिनमह नौमि सदयम् ॥१६॥
वैराग्य भक्तिभूमा भगवति सहजानन्दरूपे परस्मिन्
ब्रह्मण्यध्यात्मनिष्ठा भवति निरुपम सर्वमेतद्धि यस्य ।
यद्वाङ्घ्रिप्यन्दसारा श्रुतिनुतसहजानन्दपादारविन्द
द्वन्द्वैकालम्बभाज स जयति मुनिराट् निष्कुलानन्दनामा १७

योऽसावाबाल्यतोऽभूत् विषयविषधरोच्छेदिवैराग्यभूमि-
र्विज्ञानालोकभानुर्भवति निरुपमो यश्च भक्त्येकसिन्धुः ।
यः साक्षात् स्वामिनारायणचरणसरोजातलब्धात्मसत्त्वः
सोऽयं श्रीमान्मुनीन्द्रो दुरितमपहरत्वच्छुतानन्दनामा ॥१८॥
महाध्यानाभ्यासं विदधतमजस्रं भगवतः
पवित्रे सम्प्राप्तं स्थितिमतिवरैकान्तिकवृषे ।
सदानन्दं सारं परमहरिवार्ताव्यसनिनं
गुणातीतानन्दं मुनिवरमहं नौमि सततम् ॥१९॥
य पुत्रो रघुवीरदेशिकमणेर्धर्मश्रियां यः पदं
यो विज्ञानफलं परामृतरसं भक्तिस्वरूप भुवि ।
धर्मैकान्तपदं व्यधत्त परितः सत्सङ्गसंवर्धकः
सोऽयं श्रीभगवत्प्रसादगुरुराड् जीयात्सतां श्रेयसे ॥२०॥
येनाचार्यपदं निजं प्रथयता ज्ञानादिभिः स्वैर्गुणै-
र्भूयानुद्धवसम्प्रदायमहिमा प्रख्यापितो भूतले ।
विद्याधर्मपथप्रवर्तनरतं चेतो यदीयं सदा
जीयादेष विहारिलालगुरुराडाचार्यचूडामणिः ॥२१॥
श्रीमद्धर्मसुताङ्घ्रिपद्ममिह ये सर्वात्मना संश्रिता-
स्तत्प्रोक्ते निजधर्म एव सततं संवर्तमाना दृढम् ।
कुर्वाणा नवधा च तस्य विमलां भक्तिं विरक्त्यन्विता-
मात्मज्ञानयुतां नमामि करुणांस्तान् सज्जनानन्वहम् ॥२२॥
हे सन्तो हरिपादपद्मनिरताः सत्सङ्गिनश्चाखिला
युष्माकं वचनेन देहमनसा ज्ञात्वापराधो मया ।
अज्ञात्वा च कृतो भवेदपि च यः क्षन्तव्य एवाखिलः
इत्यासौ करुणां भवद्भिरथ तद्धेतोः करोम्यानतिम् ॥२३॥

अतिक्षान्त्या दान्त्या मृदुलवचनैश्छादितमह-
स्निजातश्रैश्वर्योद्विलसितनृनाट्याय गुरवे ।
वसानाय श्वेताम्बरयुगलमावार्धियशसे
नमस्तस्मै नित्य हृदि भगवते ध्येयवपुषे ॥४॥
पर तीर्थस्थान ध्वजयवसरोजाङ्कुशनभो-
धनूरेखार्धेन्दुप्रभृतिशुभलक्ष्माङ्कितमपि ।
श्रिया जुष्ट तद्यत्प्रणतजनपापप्रशमन
पदाब्ज ते स्वामिन्' वसतु सहजानन्द' हृदि मे ॥५॥

---

## मुक्तस्मरणम् ।

श्रीमान् रामानुजार्यो जयति यतिपतिर्येन बोधायनादि-
प्राचीनराचार्यदृष्टे पथि सुगमयन् ब्रह्मसूत्राक्षराणि ।
श्रीभाष्य तत्त्वदर्शिप्रवरमुनिवराह्लादसिद्ध्यै विधाय
प्रास्त प्रत्यन्तमार्गे कुमतिकुकथके प्रास्तृत कण्टकौघ ॥१॥
श्रीमानुद्धव एव य समभवत् कृष्णैकभक्तो महान्
विज्ञानैकनिधि पुन क्षितितले ज्ञान प्रतिष्ठापयन् ।
रामानन्दगुरु. स एष जयति श्रीकृष्णभक्तै श्रितो
दीक्षा तामिह वैष्णवीमुपगतो रामानुजाचार्यत ॥२॥
श्रीमच्छारदपूर्णचन्द्रवदन पद्मच्छदाभेक्षणो
घोतद्गौरवपुर्विशालहृदयश्चाजानुबाहुद्वय ।
कारुण्यार्द्रतनु सिताम्बरधरो दोष्णा च पद्म दधद्
रामानन्दमुनि. करोतु भविक मुष्युद्धव सद्गुरु ॥३॥
पुनीकृत्य न्यधत्त प्रथितगुरुपदे स्वामिनारायणो य
यो धर्मज्ञानभक्ती कलियुगमपहृत्याभितो व्यापतान ।

